


॥ श्रीः ॥

# ॥ स्तोत्रकल्पतरुः ॥

अतीवरुचिरातिदुर्ल्लभनवीनप्राचीनस्तो-
त्रभरसम्भृतस्सहृदयहृदयपरमाल्हाद
प्रदानैककुशलस्सुभक्तजनभक्तिसंवर्द्धक
स्समुत्साहसंस्कृतमानससारस्वत गो
पालदत्तशर्मात्मजेनविश्वनाथशर्मणा
श्रीवाराणस्याम् श्रीभैरवप्रसादवाज
पेयि स्वामिनि श्रीगौरीशयन्त्राल
ये सुभगतरैस्सीसकाक्षरैःप्रकाशि
तः सं० १९५१ फा०शु० १ ।

पश्चिमदेशाभरणश्रीमन्नयहरपुराप्तजन्माऽ
यम् श्रीकाशीपुरवासी लक्ष्मीनारायणः
कविर्ज्जयतु ॥ १ ॥

॥ श्रीः ॥

# अथ स्तोत्र कल्पतरुः ।



श्रीगणेशायनमः॥ अथ ऋणमोचन गणेश स्तोत्र प्रारम्भः॥ ॐअस्यश्रीमदृणहरण गणपति स्तोत्र माला मन्त्रस्य श्रीभगवान् शुक्रोदेवताऋषिः ऋणमोचनगणपतिर्देवता श्रीमहागणपतिप्रीत्यर्थे जपेत्रि नियोगः॥ स्मरामिदेवदेवेशंवक्रतुण्डंमहाबलम् ॥ षडक्षरंकृपासिन्धुंनमामि ऋणमुक्तये ॥ १ ॥ महागणपतिंदेवंमहासत्वंमहाबलम् ॥ महाविघ्नहरंदेवंनमामि

होती हो भूल अर्थात् अशुद्ध भरमाम सानस आप दो जाग है।

कर्तीतरका चौथा मुख्य कार्य ब्रह्मचर्यका

ऋणमुक्तये ॥ २ ॥ एकाक्षरमेकदन्तमेकं
ब्रह्मसनातनम् ॥ एकमेवाद्वितीयंच नमा
मिऋणमुक्तय ॥ ३ ॥ शुक्लाम्बरंशुक्लवर्ण
शुक्लगन्धानुलेपनम् ॥ शुक्लपुष्पैः पूज्य
मानंनमामिऋणमुक्तये ॥ ४ ॥ रक्ताम्बरं
रक्तवर्णरक्तगन्धानुलेपनम् ॥ रक्तपुष्पैःपू
ज्यमानंनमामिऋणमुक्तये ॥ ५ ॥ पीता
म्बरंपीतवर्णपीतगन्धानुलेपनम् ॥ पीतपु
ष्पैःपूज्यमानं नमामिऋणमुक्तये ॥ ६ ॥
कृष्णाम्बरंकृष्णवर्णकृष्णगन्धानुलेपम् ॥
कृष्णपुष्पैःपूज्यमानंनमामिऋणमुक्तये ॥
॥ ७ ॥ धूम्राम्बरंधूम्रवर्णधूम्रगन्धानुलेप
नम्॥ धूम्रपुष्पैःपूज्यमानंनमामिऋणमुक्त
ये ॥ ८ ॥ सर्वाम्बरंसर्ववर्णं सर्वगन्धानु

लेपनम् ॥ सर्बपुष्पैःपूज्यमानं नमामिऋण मुक्तये ॥ ९ ॥ मद्राजादिस्वरूपञ्च पाशाङ्कुशधरंशुभम् ॥ वाचालंकोटिसूत्रञ्चन मामिऋणमुक्तये ॥ १० ॥ एवमृणमोचन स्तोत्रंत्रिसन्ध्यंयःपठेन्नरः ॥ षण्मासाभ्यन्तरेतस्य ऋणच्छेदोभविष्यति ॥ ११ ॥
इति श्रीब्रह्माण्ड पुराणे ऋणमोचन गणपति स्तोत्रं सम्पूर्णम् ॥ १ ॥ ॥ ॥



# अथ कृष्णार्जुन कृत महादेव स्तुति प्रारम्भः ।

श्रीकृष्णार्जुनरुबाचः ॥ नमोभवायश

होता है। भूमि अर्थात् प्रभुके चरणामें सोनेसे जीव भयमुक्त प्रकार हो जाता है।

कार्तिकका चौथा मुख्य कार्य ब्रह्मचर्यका पालन

र्वायरुद्रायवरदायच ॥ पशूनांपतयेनित्य
मुग्रायचकपर्दिने । १ ॥ महादेवायभीमा
य त्र्यंवकायचशांतये ॥ ईशानायमखघ्ना
य नमोस्त्वंधकघातिने ॥ २ ॥ कुमारगु
रवेतुभ्यं नीलग्रीवायवेधसे ॥ पिनाकिने
हविष्याय सत्यायविभवेसदा ॥ ३ ॥ वि
लोहितायधूम्राय व्याधायानपराजिते ॥
नित्यंनीलशिखंडाय शूलिनेदिव्यचक्षुषे॥
॥ ४ ॥ होत्रेपोत्रेत्रिनेत्राय व्याधायवसुर
तसे ॥ अचिंत्यायांविकाभर्त्रे सर्वदेवस्तु
तायच ॥ ५ ॥ वृषध्वजायमुंडाय जटिने
ब्रह्मचारिणे ॥ तप्यमानायसलिले ब्रह्म
ण्याश्राजितायच ॥ ६ ॥ विश्वात्मनेविश्व
सृजे विश्वमावृत्यतिष्ठते ॥ नमोनमस्तेसे

ष्याय भूतानांप्रभवेसदा ॥ ७ ॥ ब्रह्मवक्त्रा
यशर्वाय शंकरायशिवायच ॥नमोस्तुवाच
स्पतये प्रजानांपतयेनमः ॥ ८ ॥ नमोवि
श्वस्यपतये महतांपतयेनमः ॥ नमःसह
स्रशीरषे सहस्रभुजमृत्यवे ॥ ९ ॥ सह
स्रनेत्रपादाय नमोऽसंख्येयकर्मणे ॥ नमो
हिरण्यवर्णाय हिरण्यकवचायच ॥ १० ॥
भक्तानुकंपिनेनित्यं सिध्यतांनोवरःप्रभो ॥
॥ संजयउवाच ॥ एवंस्तुत्वामहादेवं वा
सुदेवःसहार्जुनः ॥ प्रसादयामासभवं त
दाघस्त्रोपलब्धये ॥ १२ ॥ इति श्रीमहा
भारते द्रोणपर्वणि कृष्णार्ज्जुनकृत महादे
वस्तुतिः सम्पूर्णा ॥



होती है। भूमि अर्थात् प्रभुके चरणोंमें सोनेसे जीव भयमुक्त प्रकार
हो जाता है।

कार्तिकका चौथा मुख्य कार्य ब्रह्मचर्यका पालन

# ॥ अथ यमोक्त स्तोत्रम् ॥

॥ ॐश्रीगणेशाय नमः ॥ गोविंदमाधव मुकुंदहरेमुरारे शंभोशिवेशशशिशेखरशूलपाणे ॥ दामोदराच्युतजनार्दनवासुदेव त्याज्याभटायइतिसंततमामनंति ॥ १ ॥ गंगाधरांधकरिपोहरनीलकंठ वैकुंठकैटभरिपोकमठाब्जपाणे ॥ भूतेशखंडपरशोमृडचंडिकेश त्याज्याभटायइतिसंततमामनंति ॥ २ ॥ विष्णोनृसिंहमधुसूदनचक्रपाणे गौरीपतेगिरिशशंकरचंद्रचूड ॥ नारायणासुरनिवर्हणशार्ङ्गपाणे त्याज्याभटायइतिसंततमामनंति ॥ ३ ॥ मृत्युञ्जयोग्र

विशमेक्षणकामशत्रो श्रीवत्सपीतवसनाम्बुजनीलशौरे ॥ ईशानकृत्तिवसनत्रिदशैकनाथ त्यांज्याभटायइतिसंततमामनंति ॥ ४ ॥ लक्ष्मीपतेमधुरिपोपुरुषोत्तमाद्य श्रीकंठदिग्वसनशांतपिनाकपाणे ॥ आनंदकंदधरणीधरपद्मनाभ त्यांज्याभटायइतिसंतमामनंति ॥ ५ ॥ सर्वेश्वरत्रिपुरसूदनदेवदेव ब्रह्मण्यदेवगरुडध्वजशंखपाणे त्र्यक्षोरगाभरणबालमृगांकमौले त्यांज्याभटायइतिसंततमामनंति ॥ ६ ॥ श्रीरामराघवरमेश्वररावणारे भूतेशमन्मथरिपोप्रमथाधिनाथ ॥ चाणूरमर्दनहृषीकपतेमुरारे त्यांज्याभटायइतिसंततमामनंति ॥ ७ ॥ शूलिन्गिरीशरजनीशकला

होती है। भूमि अर्थात् प्रभुके चरणोंमें सोनेसे जीव भयमुक्त प्रकार हो जाता है।

कार्तिकका चौथा मुख्य कार्य ब्रह्मचर्यका पालन

वनंश कंसप्रणाशनसनातनकेशिनाशिन्
॥ भर्गत्रिनेत्रभवभूतपतेपुरारे त्याज्याभ
टायइतिसंततमामनंति ॥ ८ ॥ गोपीपते
यदुपतेवसुदेवसूनो कर्पूरगौरवृषभध्वज
भालनेत्र ॥ गोवर्द्धनोद्धरणधर्मधुरीणगोप
त्याज्याभटायइतिसंततमामनंति ॥ ९ ॥
स्थाणेत्रिलोचनपिनाकधरस्मरारे कृष्णा
निरुद्धकमलाकरकल्मषारे ॥ विश्वेश्वरत्रि
पथगार्द्रजटाकलाप त्याज्याभटायइतिसं
ततमामनंति ॥ १० ॥ अष्टोत्तराधिकश
तेनसुचारुनाम्नां संदर्भितांललितरत्नकदं
बकेन ॥ सन्नायकांदृढगुणांद्विजकंठगांयः
कुर्यादिमांस्त्रजमहोसयमन्नपश्येत् ॥११॥
इत्थंद्विजेंद्रनिजभृत्यगणान्सदैव संशिक्ष

येदयनिगानसहिधर्मराजः ॥ अन्येपियेह रिहरांकधराधरायां तेदूरतःपुनरहोपरिव र्जनीयाः ॥ १२ ॥ अगस्तिरुउवाच॥ यो धर्मराजरचितांललितप्रबंधां नामावलींस कलकल्मषवीजहंत्रीम् ॥ धीरोत्रकौस्तुभ भृतःशशिभूषणस्य नित्यंजपेत्स्तनरसंन पिवेत्समातुः ॥ १३ ॥ इतिश्रृण्वन्कथां रम्यां शिवशर्माप्रियेनघाम् प्रहृष्टवक्रःपु रतोददर्शाप्सरसांपुरीम् ॥

इति श्रीकाशीखंडे यमलोक वर्णनं नामाष्टमोध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥



# अथ रावणोक्त तांडव स्तोत्रम

होती है। भूमि अर्थात् प्रभुके चरणोंमें सोनेसे जीव भयमुक्त हो जाता है।

कार्तिकका चौथा मुख्य कार्य ब्रह्मचर्यका पालन

ॐनमःशिवाय ॥ ॐजयवृषभध्वजहृ तमकरध्वजपुरमथनप्र मथाधिपतेदेवदेव त्रिजगन्नाथत्रिशक्तिनाथ त्रिदशेशनम स्ते ॥ १ ॥ ॐजयभूताधिपभूतिविभूषित भुजगराजभुजभूषणभव्यभव्याभिमात्रपु राधीशस्त्रिगुणस्त्र्यंबकनाथनमस्ते ॥ २॥ ॐजयमृत्युंजयदक्षमखक्षयविष्णु विरंचि नमितपदपद्मपद्मागार पद्मपदमार्गोपिना कपाणेप्रभोनमस्ते ॥ ३ ॥ ॐजयसुंदर जटसुखदमहानटमहाकालकाली हृदयसु हृदानंदनिरीहनिरंजन निर्वाणनिबंधनम स्ते ॥ ४ ॥ ॐजयतिपरंपरवचनगोचर वामदेवजयवद्धनानित्यानित्यानित्यविपत्ति विनाशननंदिकेशनंदीशनमस्ते ॥ ५ ॥

जयतेजोमयनिरुपमनिर्भय महादेवकैला-
सनिवासकैलासाप्रियकरुणासिंधो पंचव
दनपरमेशनमस्ते ॥ ६ ॥ जयरजनीप्रिय
रविशिखिलोचनलोकनाथगिरिजेशगिरी
शगिरिराजेशनिशीशशरणप्रभोशंकर शं
भोसदानमस्ते ॥७॥ जययुगनायकमंगल
दायकमंगलेशचतुराननलक्ष्यदक्षादक्षवि
पक्षविनाशन विश्वनाथ विश्वेशनमस्ते
॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



# अथ श्री हरिविरचितं शिवाष्टकं ॥

[illegible] मधुरे [illegible]
हो [illegible] है।
[illegible]

॥ श्रीगणेशाय नमः ॥ ॐकारेआदिरू
पेसुकृतवह्निविधि श्वेतपीतेचकृष्णे नीलेर
क्तेकपोतेतदुपरिहरिते सर्ववर्णेविवर्णे ॥
प्राणापानेसमानेत्रिपरितवर्णे व्यापदुद्यान
पीठे एकोव्यापीशिवोयामितिवदति ॥ ह
हरिर्न्नास्तिदेवोद्वितीयः ॥ १ ॥ पाताले
चान्तरिक्षेदशदिशगगनेसर्वशैलेसमुद्रे भ
स्मेलोष्ठेचकाष्ठेक्षितिजलपवने स्थावरे
जंगमेवा ॥ बीजेसर्वौषधीनामसुरसुरनरे
पुष्पपत्रेत्रिणाग्रेएकोव्यापीशिवोयंयमिति
वदतिहरि र्न्नास्तिदेवोद्वितीयः ॥ २ ॥ श
ब्देस्वादेचनादेरविशशिभवने तारकाज्यो
तिरूपे कामेक्रोधेविनोदेअहिउहिमथे हा
स्यक्रीडामनेके ॥ जाग्रेस्वप्नेसुषुप्तेसित

रजतमसि प्रेतरूपेतुरीयेएको० ॥ ३ ॥
शीतेचोश्नेभ्युभवाभवभयगहने पुण्यपाठे
विकारे द्वेषेरागेविरागेविकृतऋतुगणे का
लरूपेविकारे ॥ ; सौख्येरौक्षेसमक्षेस्व
रितऋतुगणे सर्वशुद्धेविशुद्धेएको ॥ ४ ॥
देवेदैत्येमुनिंद्रग्रेहगणऋषयः सर्वगंधर्वप
क्षे योगेभोगेवियोगेप्रगुणितगुणिते सर्व
शुद्धेवनेवा ॥ वेदेशास्त्रेपुराणेवुजनजठरे
नीयतेकर्मनासेएको० ॥ ५ ॥ ज्ञानेध्याने
प्रमाणेप्रभवतिविलये नास्तिरूपेषुकाले
ब्रह्मेविष्णुश्चरुद्रेअफलकुलमयो विश्वरू
पेविरूपे मंत्रेयंत्रेअराधेसुरपालितगणे स्य
वांतीर्थेप्रसिद्धेएको० ॥ ६ ॥ धर्मेतीर्थेय
ज्ञेजपतपनियमे स्नानदानेविधाने कीर्ते

होती है। भूमि अर्थात् प्रभुके चरणोंमें सोनेसे जीव भयमुक्त हो जाता है।

कार्तिकका चौथा मुख्य कार्य ब्रह्मचर्यका

कर्मेकृतान्तेबहुविधिरचते दुष्करेवाकृता
न्ते ॥ कूर्मेकीटेपतंगेपशुखगसकले अंत
रात्मांस्वरात्मेएको० ॥७॥स्थूलेसूक्ष्मेसमा
नेचलतिदृढमतेयोगयुक्तेप्रसिद्धेमूर्त्योभूर्त्ये
कपाल्नेपडमृतुरमणे सिद्धभेदेपिबाले पूतं
च्छब्रविचारेप्रभासितावेदितंदुग्जतेवैतलिं
गेएको० ॥ ८ ॥ रत्नेजलप्रयत्नेमृत्युमयक
ठिने वज्रसारेअसारे धूपेदीपेजवालेअहि
तहितमयः कौस्तुभःपारिजाते ॥ शुद्धेविद्धे
चशास्त्रअथितिपरगृहे उग्यतेजोविशाले
एको० ॥ ९ ॥ इतिश्री हरिविरचितं गि
वाष्टक स्संपूर्णम् ॥ ॥ ॥ ॥



( स्तो०क०त० )

## ॥ अथ प्रणवस्तोत्रं ॥

श्रीगणेशाय नमः ॥ ॐस्वयंजोतिरूपं निराकारशून्य मकारंचपूर्वेउकारंद्वितीयं त्रितीयंमकारंस्वयंचार्द्धमात्रं भजेहंतमोंकारज्योतिस्वरूपम् ॥ १ ॥ मृगंनीरगंभीर नेत्रे विलोक्यं तदिदं निराकार आकार दृश्यं अनिलेमुखेनेत्रमंद्रार्धयुग्मं भजेहम् ॥ २ ॥ विराट्स्वरूपंधराध्वातपादौ शिरशोभितंसत्यलोकादि उर्ध्वसदाभक्त हेतुनदूरंसमीपंभजेहं ॥ ३ ॥ विरंचीमवे विष्णुरुद्रिनस्याजलेवास्थलंकाष्ठपाषास र्वं तृणंवालतागुल्ममध्येप्रलिप्तंभजेहं ॥

॥ ४ ॥ ततंवित्ततंनिस्वासशब्दचतुर्मा
दिमध्येयंरूपसंस्थं अखंडंसवीर्यसमस्थेंत्त
रस्थंभजेहं ॥ ५ ॥ अगम्येषुगम्यंअल
क्ष्येषुलक्षं अनाथस्यनाथंजगन्नाथनाथ
सदासेवितुंमुक्तिमार्गैपदस्थैभजेहम् ॥६॥
मनः शांतियुक्तःपठेस्तोत्रनित्यं जनोजा
यतेमुक्तिमार्गस्यसद्यं भवाबद्धोपुनर्जन्म
नास्तिहतस्यभजेहम् ॥ ७ ॥ अनित्यंश
रीरंपरिग्राह्यकृत्वा त्वमेवशरण्यंत्वमेवश
रण्यं शुकंसुंदरंस्वल्पवुध्यावदंति जनाय
त्रसिपठेज्योतिरूपं ॥ ८ ॥ इतिश्री शुका
चार्येनोक्तं प्रणवस्तोत्रं संपूर्णम् ॥

# अथ प्रत्यङ्गिरा स्तवराजम् ।

श्रीगणेशायनमः ॥ ॐअस्य श्रीप्रत्य
ङ्गिरास्तोत्रमन्त्रस्य महादेवऋषि स्त्रिष्टु
पछन्दः श्रीप्रत्याङ्गिरा देवता हंबीजह्रींश
क्तिः क्रींकीलकं ममाभीष्टसिध्यर्थे जपेवि
नियोगः ॥ मंदरस्थंसुखासीनंभगवंतंमहे
श्वरम् ॥ समुपागम्यचरणोपार्वतीपरिपृ
च्छति ॥श्रीपार्वत्युवाच । धारणीयामहावि
द्याप्रत्यङ्गिरामहोदया॥ नरनारीहितानां
चबालानांरक्षणायच ॥ रक्षामण्डलिका
नांचदीनानांचमहेश्वर ॥ ओंश्रीशिवायन
मः ।विदुषांचद्विजातीनांविशेषेणार्थसाधि
नी ॥ महाभयेषुघोरेषुविद्युदग्निभयेषुच ॥

व्याघ्रदंष्ट्रानखाघातेनदीनदसमुद्रके। अ
भिचारेषुसर्वेषु युद्धेराजभयेषुच ॥ विदुषां
चद्विजातीनां विशेषज्ञानदायिनी ॥ सौभा
ग्यजननीदेवी न्हणांवश्यकरीतथा ॥ शत्रू
णांनाशिनीदेवी सूचितानप्रकाशिता। तां
विद्यांभोस्सुरश्रेष्ठकथयस्वममाप्रिये ॥ श्री
भैरवउवाच ॥ साधुसाधुमहाभागे जन्तू
नांहितकारिणि ॥ तववाक्यात्सुरेशानि क
थयानिनसंशयः॥देविप्रत्यङ्गिराविद्या सर्व
ग्रहविनाशिनी ॥ मर्दिनीसर्वदुष्टानां सर्व
पापप्रमोचिनी ॥ स्त्रीबालप्रभृतीनां चजं
न्तूनांहितकारिणी ॥ सौभाग्यजननीदेवि
बलपुष्टिकरीसदा ॥ चतुष्पथेषुगेहेषु वने
षूपवनेषुच ॥ श्मशानेदुर्गमेघोरे संग्रामे

शत्रुसंकुले ॥ राजद्वारेचदुर्भिक्षेमहाभयउ
पस्थिते ॥ पठितापाठितादेविसर्वसिद्धिक
रीस्मृता ॥ यस्याङ्गस्थामहाविद्या प्रत्य
ङ्गिराशिवात्मिका ॥ विद्यानामुत्तराविद्या
धारिनावाचिताजनैः ॥ लिखित्वाचकरेक
ण्ठे वाहौशिरसिधारयेत् ॥ मुच्यतेचमहा
घोरे मृत्युभीतिदराक्षसैः येग्रहादुष्टसञ्चा
रा देवराक्षसपन्नगाः ॥ नतस्यपीडांकुर्व
ति येचान्येपीडकाग्रहाः ॥ मायाद्याव्यभि
चाराश्च नोतस्यप्रभवंतिवै । नित्यंधारय
माणस्यअमरत्वंप्रयच्छति । योधारयेद्यो
गयुक्त स्तस्यरक्षाभवेद्ध्रुवम् । धारितावा
चिताविद्यासर्वसिद्धिकरीस्मृता सिद्धाऽर्थ
सिद्धिदाविद्या निक्षेपंपरमामता । श्रीमता

घोररूपेण भाषिताघोररूपिणी। प्रत्यङ्गिरासदाप्रोक्ता रिपून्हन्यान्नशंसयः। रक्तचंन्दनमिश्रेण रोचनाकुंकुमेनच। लिखित्वाभूर्यपत्रेतुधारणीयासदानृभिः॥ पुष्पैर्धूपैर्विचित्रैश्च वल्युपाहारपूजनैः पूजयित्वायथान्यायं शातकुंभेनवेष्ठयेत्॥ धारयेद्यइमांविद्यां निश्चितंरिपुनाशकः॥ विलयंयांतिरिपवः प्रत्यङ्गिराविधारणात्॥ यद्यत्स्पृशतिहस्तेनयत्यद्वदतिजिव्हया अमृतंतद्भवेत्सर्वं मास्मृत्युःकदाचन॥कर्मणायोजयेद्यस्तुकृत्रिमंदारुणंतथा॥ भक्षितंजरयत्याशुनरस्यतस्यसुव्रते॥ तथास्यां पच्यमानायां जीर्यतेनात्रशंसयः॥ मंत्रराजोह्ययंदेविसर्वसिद्धिकरःस्मृतः। सर्वं

मंत्रविनाशीच गोलकस्यांतरेस्थितः॥ स
र्वव्याधिहरीविद्याप्रत्यङ्गिरामहेश्वरि।प्रा
प्नोतिवसुधांसर्वां रिपुहस्तगतांश्रियम् ॥
वशास्तस्यचातिष्ठंतिशत्रवः प्राणहारकाः
॥ भवंतिवशगास्तस्य सुन्दर्य्यःप्रियदर्श
नाः अभ्यस्यतांयातिविद्यां सिद्धिदेव्याःप्र
सादतः॥ चराचरमिदंसर्वंसशैलवनकान
नम् ॥ नरनारीसमाकीर्णं साधकस्यचसु
व्रते । सर्वदावशतांयान्ति सिद्धिदेव्याःप्र
सादतः ॥ गोलकस्यप्रभावेण प्रत्यङ्गि
राप्रभावतः ॥त्रिपुरेशश्चमांदद्या दिमांवि
द्यांच जानंताम्॥ निर्जिताश्चासुरास्सर्वो दे
वैर्विद्याभिमानिभिः ॥ गोलकंचप्रवक्ष्या
मि भैषज्यानिचसर्वशः ॥ क्रांतामद

नकेचैव रोचनाकुंकुमंतथा ॥ चापुष्करं
विषारिष्टं सिद्धार्थमालतीतथा ॥ एतद्द्र
व्याणिवैभद्रे गोलमध्येनिधारयेत् । संभृ
तंधारयेन्मंत्री धारकोमन्त्रवित्सदा ॥ अ
धुनासंप्रवक्ष्यामि प्रत्यङ्गिरासुभावितम्
। दिव्यैर्मन्त्रपदैश्चित्रैः सुखोपायैःसुखप्र
दैः ॥ पठेद्रक्षाविधानेन मंत्रराजःप्रकीर्ति
तः ॥ अथमंत्रपदानिवक्ष्यन्ते ॥ ॐनमः
शिवायसहस्रसूर्येक्षणाय अनादिरूपायपु
रुषाय पुरुहूतायसूक्ष्मायसहस्रमूर्त्तये ॥ म
हामरपापव्यापिने महेश्वरायजगच्छान्ति
कारिणे शान्तायसर्वव्यापिने महाघोराति
घोराय ॐमहाप्रभावंदर्शय दर्शयममश
त्रूनाशय ॥ २ ॥ ॐह्रिलि ॥ २ ॥ ॐमि

लिं २ ॐ विलि २ ॐ चिलि २ ॐ विद्युज्जिह्विकेज्वल २ प्रज्वल २ वन्ध २ मथ २ प्रमथ २ ध्वंसय २ प्रध्वंसय २ ग्रासय २ पिव १ नाशय २ भ्रामय १ त्रासय २ विद्रावय २ भक्षय २ ममशत्रून् ॥ रक्षत्वंमांसपरिवारकंरक्ष २ स्वाहा ॥ ओं रं ३ ओं चं ३ ओं लं ३ सर्वभूतभयोपद्रवेभ्यो महामेघौघमंवर्त्ताग्नि विद्युदर्कमूर्तिकपर्दिनि दिव्यकनकाम्भोरुह विकचमालाधारिणि शितिकण्ठकपालिनि व्याघ्राजिनककुदिपरमेश्वर प्रियेममशत्रून्छिन्दि २ भिन्दि

१ विद्रावय २ देवपितृपिशाच नागासुरगरुडविद्याधर गंधर्वयक्षराक्षस। नृलोकपालान् ग्रहान्स्तम्भय २ नाशय २ येचममधारकस्यस परिवारकस्यश त्रवस्तान्निकृंतय २ येचम माविद्यां कर्मकुर्वंतिकार यंतिवातेपाम् विद्यास्तम्भय २ स्थानंकीलय २ ग्रामंकीलय २ घातय २ ओंविश्वमूर्त्तयेमहातेजसे ओंयः २ ओं वः ओंठः ममशत्रूणांशिरःस्तम्भय २ स्वाहा ॥ ओंयःओंठः २ ममशत्रूणां दन्तान्स्तम्भय २ स्वाहा ॥ ओंयः २ ॥ ओंठः २ ममशत्रूणां जिव्हां स्तम्भय २ ओंयः २ ओंठः॥

२ ॥ ममशत्रूणां हृदयंस्तम्भय २ ॥ ओंय ओंठः २ ॥ ममशत्रूणां हस्तौस्त म्भय २ ओं यः २ ओं ठः २ ॥ ममशत्रूणां गुह्यंस्तम्भय २ ओं यः ओं ठः २ ममशत्रूणां पादौस्तम्भय ॥ २ ॥ ओंयः ॥ २ ॥ ओंठः ममशत्रूणां कुटुम्बकानिस्तम्भय ॥ २ ॥ ओंयः २ ओं ठः ॥ २ ॥ ममशत्रूणांस्थानंकीलय २ ॥ ओंयः २ओंठः २ममशत्रूणांमण्डलंकीलय यः २ ॥ ॐ ठः ममशत्रूणांग्रामंकीलय २ ॥ ॐ यः २ ॥ ॐ ठः २ ॥ सर्वसि द्धिमहाभागे ममधारकस्य सपरिवारक स्यसर्वतोरक्षांकुरु २ ॥ स्वाहा २ ॥ ओं यः २ ॥ ओंन्हं २ ॥ ओं क्षीं २ ॥

फट्स्वाहा २ ॥ ओं ओं ओं ओंहूं २ ॥ यं ५ रं ५ ॥ लं ५ ॥ वं ५॥ ह्रीं ५ ॥ ह्रींह्रंफट्स्वाहा २ ॥ ओंप्र त्यङ्गिरेमहादेविममधारकस्य सपरिवार कस्यरक्षांकुरु ॥ २ ॥ स्वाहा ॥ २ ॥ ओं यः २ ॥ ओंठः २ ॥ ओंहूंह्रीं २ ॥ सर्वतोफट् ॥ २ ॥ स्वाहा ॥ ओंनमोभगव तिवेतालिनिचण्डविनाशिनि ॥ दुष्टचारिणि त्रिशूलवज्रांकुशशक्तिधारिणि रुधिरमांस भक्षिणि कपालखट्वांगवरासिधारिणि म मधारकस्यसपरिवार कस्यशत्रून्हन २॥ दह २ ॥ पच २ ॥ मथ २ ॥ सर्वदुष्टान्ग्रा सय २ ॥ ओंहूं २ ॥ दंष्ट्राकरालिनिमम कृतेमन्त्रादिकं अभिचारंचसर्वोपद्रवादिकं

येनकृतं कारितंकुरुतेकारयतिकरिष्यतिका
रयिष्यतिवातान्सर्वान्हन २ ॥ प्रत्यङ्गि
रेरक्ष २ ॥ त्वंमांधारकंरक्ष २ ॥ हुंफट्स्वा
हा २ ॥ ओंस्फुरहुं २ ॥ फट् २ ॥स्वाहेति
वलिदानमन्त्रः अथमंत्रस्यहोमंतुप्रवक्ष्या
मियथागमम् ॥ ओंऐंह्रींश्रींब्रह्माणिमम
शिरोरक्ष २ ॥ स्वाहा १ ॥ ऐंह्रींश्रींवैष्ण
विममकण्ठंरक्ष २ ॥ स्वाहा २ ॥ ऐंह्रीं
श्रींवाराहिममहृदयंरक्ष २ ॥ स्वाहा २ ॥
ऐंह्रींश्रींनारसिंहिममवाहूरक्ष २ ॥ स्वाहा
२ ऐंह्रींश्रींचामुण्डेममजंघेरक्ष२स्वाहा २ ऐं
ह्रींश्रींवसुंधरेममपादौरक्ष२स्वाहा २ ऐंह्रीं
श्रींस्फुं २ ॥ हूंप्रत्यङ्गिरेममसर्वगात्रंरक्ष
२ स्वाहा ॥३॥ स्ताम्भिनीमोहनीचैव क्षोभि

णीद्राविणीतथा ॥जृम्भिणीभ्रामरीरौद्रीत
थासंहारिणीतिच॥ शक्तयःक्रमयोगेन श
त्रुपक्षेनियोजिताः ॥ धारितासाधकेन्द्रेण
सर्वशत्रुविनाशिनी॥ओंस्तंभिनिस्फ्रें२मम
शत्रून्स्तम्भय२॥ स्वाहा॥ओंक्षोभिणीस्फ्रें
२ ममशत्रून्क्षोभय २॥स्वाहा ओंद्राविणि
स्फ्रें २ ममशत्रून्विद्रावय २स्वाहा॥ओंजृ
म्भिणिस्फ्रें २ ॥ममशत्रूनजृम्भय२स्वाहा
ओंभ्रामरिस्फ्रें २ ॥ ममशत्रून्भ्रामय
२ स्वाहा ॥ ओंहूंप्रत्यङ्गिरेस्फ्रें २ ॥ वि
कटदंष्ट्रेह्रीं २॥ किलि २ ॥ स्फ्रेंत्कारिणि
ममशत्रून्छेदय २ ॥ खादय २॥ सर्व
दुष्टान्मारय २ ॥ खड्गेनाछिन्दि २ ॥
किलि ३॥ विध्यि२॥पिब२॥रुधिरंस्फ्रें२॥ कि

रि२॥ कलि॥२॥आंह्रींफट्पदमांधारयेद्विषां
त्रिसंध्यंचास्मरेदपि ॥ सोपिदुःखान्तको
वापि हन्याच्छत्रून्नसंशयः ॥ १ ॥ पठि
ताधारतादेवि यमुद्दिश्यचपठ्यते॥ तस्य
शत्रोःक्षयोनित्यं भवेद्देविनशंसयः ॥ १ ॥
सर्वतोरक्षतेविद्या महाभयविपत्तिषु ॥ म
हाभयेषुघोरेषु नभयंविद्यतेक्वचित् ॥ पुरा
पिचमयाप्रोक्ता सिद्धयःक्रमसंस्थिताः ॥ब्र
ह्मणासाधितादेवि विष्णानाप्रभविष्णुना॥
नाम्नाचदेवदेवेशैशक्राद्यैरपिचर्चिता ॥अ
स्याश्शक्तिप्रभावेणानिर्जितश्चासुरासुरैःस
र्वान्कामानवाप्नोतिमर्त्योदेविनशंसयः॥कू
टस्थाकुरुतोदिक्षु विदिक्षुविजयस्तथा॥ फ
ट्कारेणसमाप्येत रक्षयेत्साधकोत्तमम् ॥

यद्दुर्लभंभवेत्कर्म यदशक्यंचजायते ॥त
त्रतत्रनियोक्तव्या महादेवीमनीषिभिः ॥
ओं२॥ कृत्रौंडिदेवदत्त ॥ ३ ॥ ओंहूंओंह्लों
संठःइतिश्री प्रत्यङ्गिरास्तवराजस्समा
प्तः ॥ शुभमस्तु ॥



# अथ काशी स्तोत्र प्रारम्भः ।

ओंश्रीगणेशाय नमः । मनोनिवृत्तिःप
रमोपशांतिः सातीर्थवर्यामणिकर्णिकाच
ज्ञानप्रवाहोविमलाहिगंगा साकाशिकाहं
निजबोधरूपा॥१॥यस्यामिदंकल्पितमिंद्र
जालं चराचरंभातिमनोविलासं सच्चित्

सुखैकंजगदात्मरूपंसा०॥२॥पंचात्मकोशे
षुविराजमाना बुद्धिर्भवानिप्रतिदेहगेहेसा
क्षीशिवःसर्वगतांतरात्मासा०॥३॥ काश्या
हिकाश्यतेकाशीकाशीसर्वप्रकाशिका॥ सा
काशीविदितायेन तेनप्राप्ताहिकाशिका ४
काशीक्षेत्रंशरीरंत्रिभुवनजननीव्यापिनीज्ञा
नगंगा भक्तिश्रद्धागयेयंनिजगुरुचरणध्या
नयोगःप्रयागः विश्वेशोयंतुरीयःसकलज
नमनः साक्षिभूतांतरात्मा देहेसर्वंमदीयेय
दिवसतिपुन स्तीर्थमन्यत्किमस्ति वारा
णस्यांपुरारिःपरमकरुणया मुक्तिदोविष्णु
भक्तं गंगायामर्धदेहंहरिहरसुकावि प्राहक
र्णेकिलेदंनेयंगंगानकाशीत्व मपिनचहरि
र्नैवमुक्तिर्नचाहं सर्वंचैतन्यगात्रंजगद्दिद

खिलंस्वप्नवच्चेद्वियत्तः॥इतिकाशीस्तोत्रं॥



# अथ भैरव भकारादि अष्टोत्तरशत नामावली।

॥ श्रीगणेशायनमः ॥ भैरवोभैरवीनाथो भैरवीगणसेवितः ॥ भैरवारावकर्त्ताचभैर वाभयनाशकः ॥ १ ॥ भीतिभृद्भीतिदश्चैव भीतिहृद्भीतिभीतिकृत् ॥ भीतिनाशकना माचभीतिहारिसमर्चनः ॥२॥भ्रान्तिदोभ्रां तिहारीचभ्रान्तिवारकसेवकः॥भ्रान्तिभेदि पद्माब्जार्चोभ्रान्तिभेदकदर्शनः ॥ ३ ॥ भ क्तकारुण्यशालीचभक्तपालनतत्परः॥भक्त

भुक्तिप्रदश्चाथ भक्तापद्विनिवारकः ॥ ४ ॥
भक्तिमद्रक्षकश्चैव भक्तिवर्जितकोपभृत् ॥
भक्तितुष्टमनाश्चाथ भक्तिदायीचभक्ति
मान् ॥ ५ ॥ भावगम्भीरताशोभी भाव
ग्राहीचभाववित् ॥ भावभृज्जनसन्तुष्टो
भावहीनपराङ्मुखः ॥ ६ ॥ भिक्षाचारी
चभिक्षाशी भिक्षापात्रैकमण्डनः ॥ भिक्षा
न्नप्रियएवाथ भिक्षाभोजिविभूषितः ७ ॥
भोगदोभोगिभूपश्च भोगानासक्तमानसः
॥ भोगिश्रेष्ठश्चभोगाढ्यो भोगाकाङ्क्षि
समीडितः ॥ ८ ॥ भस्मभृद्भस्मशायीच
भस्मधारिप्रियस्तथा ॥ भस्माशीभस्मशु
भ्राङ्गोभस्मीकृत निजामयः ॥ ९ ॥ भी
रुभीरुमनःप्राप्योभीरुमानसमण्डितः ॥ भी

रुताहारिसेवश्चभीरुसेनापराङ्मुखः १०
भाग्यवान्भाग्यदायीचभाग्यवज्जनपूजितः
भाग्यकारिस्मृतिश्चैव भाग्यशालिकृपाक
रः ॥ ११ ॥ भास्करोभास्करद्योतोभास्क
रामृतघृणिदृक् ॥ भास्करस्थानदाताच
भास्करालोकतत्परः ॥ १२ ॥ भूपतिर्भूप
तिस्थैर्योभूपतिव्रातसंस्तुतः ॥ भूपतिश्री
प्रदश्चैव भूपत्याकाङ्क्षितप्रदः ॥ १३ ॥
भूधरोभूधराङ्कश्चभूधरोत्पाटनक्षमः ॥ भू
धराधीश्वरश्चैवभूधरावासमोदकृत्॥१४॥
भूरिविद्यश्चभूरीशो भूरिभूषणभूषितः ॥
भूरिवित्तप्रदश्चैव भूरिकारुण्यसम्भृतः ॥
॥ १५ ॥ भूतेशोभूतभर्त्ताचभूतोत्पत्तिक
करस्तथा ॥ भूतश्रेष्ठश्चभूनाच्योभूतजि

द्भूतबन्दितः ॥ १६ ॥ भानुमान्भानुदी
प्ताङ्गोभानुभास्वरकेशभृत् ॥ भानुमन्म
ण्डनश्चैवभानुपुञ्जजिदालयः ॥ १७ ॥
भेदभेदीचभेदस्थो भेदभिद्दर्शनस्तथा ॥
भेदहीनमनाश्चैव भेदभृत्प्रीतिवर्जितः ॥
॥ १८ ॥ भूमिदेवप्रियप्रीतोभूमिदेवैकपा
लकः ॥ भूमिदेवलसद्ध.सोभूमिदेवैकसंरतु
तः ॥ १६ ॥ भगवान्भगदश्चैवभगहारी
भगप्रियः ॥ भगवज्जनसेव्याङ्घ्रिर्भगा
काङ्क्षैकपूरकः ॥ २० ॥ भेरिगम्भीरना
दश्चभेरिबादनरागभृत् ॥ भेरिनिस्वनस
न्तुष्टोभेरिरम्योदरस्तथा ॥ २१ ॥ शंत
मष्टोत्तरंनाम्नांभैरवस्यमहात्मनः ॥ यःप
ठेत्प्रातरुत्थाय सव्रजेद्वाञ्छितम्फलम् ।

॥ २२ ॥ शतावृत्त्याजयेच्छत्रून्दशावृत्त्या ज्वरादिकम् ॥ अभिमन्त्र्यपयोऽनेनदद्या त्प्रेतादिशान्तये ॥ २३ ॥ भूर्जपत्रेलिखि त्वैतद्धारयन्दक्षिणेभुजे ॥ सर्वोपद्रवशा न्त्यैतिमर्त्यस्सुखमनुत्तमम् ॥ २४ ॥ यद्य त्कामयतेमर्त्यस्तत्तदाप्नोतिसत्वरम् ॥ ध नन्धान्यंयशःप्रज्ञान्दीर्घमायुश्चसन्ततिम् ॥ २५ ॥ इतिश्रीमेरुतन्त्रेभैरवभकाराद्य ष्टोत्तरशतनामावलीसम्पूर्णा ॥



# अथ गायत्रीकवच प्रारम्भः ।

श्रीगणेशायनमः ॥ अस्यश्रीगायत्रीक

चचस्य ॥ ब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुस्सामाथर्वाणिच्छन्दांसि ॥ परब्रह्मस्वरूपिणीगायत्रीदेवता ॥ तत्सवितुर्वरेण्यमितिवीजम् ॥ भर्गोदेवस्यधीमहीतिशक्तिः ॥ धियोयोनःप्रचोदयादितिकीलकम् ॥ गायत्रीसावित्रीसरस्वतीप्रसादसिद्ध्यर्थे जपेविनियोगः ॥ अथध्यानम् ॥ मुक्ताविद्रुमनीलहेमधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटान्तत्त्वात्म वर्णात्मिकाम् ॥ सावित्रींवरदाभयाङ्कुशकुशान् शुभ्रङ्कपालङ्गुणं शङ्खञ्चक्रमथारविन्दयुगलं हस्तैर्वहन्तीम्भजे ॥ १ ॥ इतिध्यानम् ॥ गायत्रीपूर्वतः पातुसावित्रीपातुदक्षिणे ॥ ब्रह्मविद्यातुमाम्पश्चा दुत्त

रश्मिन्सरस्वती ॥ १ ॥ पावक्यान्दिशि
मांरक्षे त्पावकोज्ज्वलरूपिणी ॥ नैर्ऋत्या
न्दिशिमांरक्षे द्यातुधानीभयङ्करी ॥ २ ॥
वायव्यान्दिशिमांरक्षे त्पवमानविनाशिनी
॥ रौद्यान्दिशिचमांरक्षे द्रुद्राणीरुद्ररूपि
णी॥ ३ ॥ब्रह्माण्यूर्द्ध्वञ्चमांरक्ष दधस्ताद्वै
ष्णवीतथा ॥ रक्षेदशसुमान्दिक्षु सर्वाङ्ग
म्भुवनेश्वरी ॥ ४ ॥ तत्पदम्पातुमेपादौ
जङ्घेमेसवितुःपदम् ॥ ५ ॥ वरेण्यङ्क
टिदेशेतु नाभिम्भर्गस्तथैवच ॥ देवस्य
पातुहृदय न्धीमहीतिगलन्तथा ॥ धियोमे
पातुजिह्वान्तु यःपदंनेत्रगोलके ॥ ६ ॥
ललाटंनः पदम्पातु मूर्द्धानंमेप्रचोदयात्
तत्पदम्पातुमूर्द्धानं सकारः पातुभालकम्

॥ ७ ॥ चक्षुषीमेविकारश्च तुकारःश्रोत्र
योर्म्मम नासापुटेवकारोमे रेकारस्तुकपो
लके ॥ ८ ॥ णिकारस्तूत्तरोष्ठमे यङ्का
रस्त्वधरोष्ठकम् ॥ आस्यमध्येभकारस्तु
र्गोकारश्चिवुकेतथा ॥ ९ ॥ देकारः कण्ठ
देशञ्च वकारस्स्कन्धदेशकम् ॥ स्यकारो
दक्षिणेहस्ते धीकारोवामहस्तके ॥ १० ॥
मकारोहृदयंरक्षे ह्रिकारोजठरेतथा ॥ धि
कारोनाभिदेशञ्च योकारस्तुकटिन्तथा ॥
॥ ११ ॥ गुह्यरन्ध्रेतुयोकारःऊरूमेनपदा
क्षरम् ॥ प्रकारोजानुनीरक्षे चचोकारोजङ्
घयोर्मम ॥ १२ ॥ दकारोगुल्फदेशेच या
त्कारःपदयुग्मकम् ॥ एतत्तुकंचस्पुण्य
म्बा धाशतनिवारणम् ॥ १३ ॥ चतुःष

ष्टिकलाविद्या विलासैश्वर्यासिद्धिदम् ॥
जयारम्भेतुहृदयञ्ज पान्तेकवचम्पठेत् ॥
॥ १४ ॥ मातृद्रोहीपितृद्रोही सुमहापात
कोऽपिवा ॥ मुच्यतेसर्वपापेभ्यः परब्रह्मा
धिगच्छति ॥ १५ ॥ अभिमन्त्र्यचगाय
त्री कवचंमनसापठन् ॥ तज्जलम्पिवतो
नित्य म्पुरश्चर्याफलम्भवेत् ॥ १६ ॥
इतिश्रीवासिष्ठसंहितोक्तं गायत्रीकवचं
सम्पूर्णम् ॥ ॥ * ॥ ॥



# अथ पितृषट्पदी प्रारम्भः ।

ओम् ॥ भोःपितरःखलुनमयाविहिता

न्यागांसिकिंसताम्भवताम् ॥ तदपिकुरु
तमयिकरुणांयद्वो इंहतमतिःपृथुकः॥१॥
कुर्वन्तुनयदिशिशवोमन्तून्गुरवश्च जातु
नसहेरन् ॥ तत्कथमेतेशिशवोगुरवस्ते
थोकथंवदत ॥ २ ॥ येषुजनेषुसुकरुणा
विलसतिपितरः क्षमावताम्भवताम् ॥ कि
मुनभवन्त्यगदास्ते कृतिसुकृतिप्रवरयश
सश्च ॥ ३ ॥ विदधातिभवतान्त्रासिबहु
र सरुचिरैस्सुभक्ष्यभोज्यैर्यै ॥ सुखधनत
नुजयशोभिः पितरःकिन्तेनमोदन्ते ॥४॥
अधुना कारिपुरावाभवता म्भक्त्या चैन
न्तुयैःपितरः ॥ जगतिदशाङ्किमिमान्ते
कथयनकथमपिकिंगुलभन्ते॥५॥ यूयंयदिहश
रण्या यदिचाहंशरणगासुभृत्प्रवरः ॥ पि

तरस्तर्हिभवद्भिर्दीनो रम्ये कान्तमर्नुर्क रम्यः ॥ ६ ॥ एताम्पितृषट्पदिकाम्प्रातः प्रत्यहमथापदांसमये ॥ पठतिमुदा यस्सजनस्सर्वान्कामानवाप्नोति ॥ ७ ॥ इतिश्रीमत्कौशल्यगोत्रो द्भवलक्ष्मीनारायणाङ्कयकविवरविरचिता पितृषट्पदी सम्पूर्णा ॥ ॥ ॥ ॥



# अथ गङ्गालहरी प्रारम्भ ।

ॐस्वस्ति श्रीगणपतयेनमः ॥ अथ गङ्गालहरी शतकप्रारम्भः ॥ विधिरपि

तवगङ्गे शीलयन्सद्गुणाब्धियदपिसम
यतेनोतस्यपारङ्गमत्वम् ॥तदपिदुरितनु
त्त्यै देवितद्विन्दुनुत्यै चपलयतिमनोमेत्व
त्पदाब्जानुरागः ॥ १ ॥ अथचतुर्दशभिः
कुलकेनध्यानम् ॥ विपुलविमलशोचिर्हैम
रत्नोप्तगेहांस्फुरुचिरमनर्घ्यं स्पष्टवासोद
धानाम् ॥ ललितकुसुमभूषा चैलसौवर्ण
कान्ति व्यजनचमरदण्डच्छ त्रभास्वत्स
खीकाम ॥ २ ॥ मकरवरमहोद्य त्पृष्ठसं
शोभितोच्चैः कलितमणिकलाप स्वर्णपर्य्य
ङ्कसुस्थाम् ॥ स्फटिकविशदमूर्त्तिश्रीकृ
ताशेकपूर्त्तिस्मितमधुरमुखाब्जा ङ्किञ्चि
दानम्रदृष्टिम् ॥ ३ ॥ कलितललितवेश
श्लोकगन्धर्वराज द्विविधमधुरगानाकर्ण

नाञ्चत्किरीटाम् ॥ मणिमयसुरमौलि प्र
स्फुरद्दीप्तिसम्पद्विलसदमलरत्नस्यूतहे
माङ्घ्रिपीठाम् ॥ ४ ॥ लसदमलमरीचि
व्रातसौवर्णराजन्म धुरिमरचनाना पादपा
थोजभूषाम्॥ मणिसुचितविसृष्ट स्वर्णका
ञ्चीमयूख स्फुरदभिनवशाटी शोभित
श्रोणिदेशाम् ॥ ५ ॥ अभिनवगजमुक्ता
यष्टिदीप्तिप्रसार स्फुरदसितनिचोल क्रा
न्तवैदूर्य्यकान्ताम् ॥ मणिनिकरचकास
त्स्वर्णकेयूरनाना विधवलयविराज द्वाहु
विद्योतमानाम्॥६॥ चलदलिकुलफुल्लभ्रा
ज्यसौरभ्यपद्म प्रचलविमलनाल भ्राजि
ता वामहस्ताम् ॥ भवभयपरिखिन्न
स्त्रान्तसंशुद्धिवाञ्छा शरणगजनसान्त्व

प्रस्फुरद्वामहस्ताम् ॥ ७ ॥ सुमणिशकल
भास्व त्स्थूलमुक्ता फलस्रग्रुचिरकनककु
म्भभ्राजिवामोर्द्ध्वहस्ताम् ॥सुरचनवरमु
द्राचारुदक्षोर्द्ध्वहस्ता मतिमृदुकरशाखा
राजमानोर्म्मिकोघाम्॥८॥धवलविमलका
न्तिस्फूर्त्युर स्सूत्रिकाढ्यांमणिकनकसुभा
सऽकण्ठभूषादधानाम्॥ कनककलिततन्तु
प्रोतमुग्धाच्छमुक्तानिकररुचिरकम्बुग्रीवि
कारोचमानाम्॥ ९ ॥सरसतरुणविम्बद्यो
तिसूक्ष्मोष्ठ विम्बांनवतरविमलाऽचतस
ज्जपापुष्यजिह्वाग्राम्॥ परिणतशुकचञ्चु
चारुमुक्ताविभूषास्फुर दगुरुविराजन्नासि
काराजमानाम् ॥ १० ॥ विविधविमल
भास्वद्धृष्णिदेदीप्यमान प्रियमणितनुख

ण्डस्फुरद्धेमावतंसाम् ॥ श्रुतिकलितमनोज्ञस्वच्छराजत्पलाशस्फुट मरकतकान्तिस्पर्द्धिदिव्याब्जयुग्माम् ॥ ११ ॥ तनुतरवरसान्द्रश्यामसु स्निग्धपक्ष्मप्रचुररुचिरभृङ्गभ्राजमानाम्बुजाक्षीम् ॥ कुसुमशरविराज दृढप्तचापाभिमानच्छिदुरनिविडनीलभ्रूलताद्वन्द्वरम्याम् ॥१२॥ शिशिशिरखरांशुप्रोल्लसच्चारुबिम्बप्रतिभटतिलकोच्चैःकान्तिपुञ्जातिकान्ताम् ॥ जलदपटलमुक्तस्वच्छराकेन्दुखण्डच्छ विविजयधुरीणप्रोल्लसद्भालदेशाम् ॥ १३ ॥ ललितललितभृङ्गश्रे णिनीलामलोद्यन्मृदुलकुटिलसूक्ष्मस्वच्छमुक्तालकास्याम् ॥ रुचिरकिरणचञ्चद्रत्नवारो ल्लसत्सत्कनक

कलितभास्वद्दीप्तिराजत्किरीटाम् ॥ १४॥ रुचिरमुकुटकोटिप्रस्फुरच्चित्तहारिस्फुटसुर भित्रिसारस्फारमन्दारमालाम् ॥ सकृद पिजितचित्तादेविभागीरथित्वान्दधतिहृद यपद्मेयेनकिन्तेकृतार्थाः॥ १५ ॥ भगव तितवतीरम्भ्रोच्छलत्स्वच्छनीरंमृदुसुरभि मसीरंसाधुकूजत्सुकीरम् ॥ कुसुमिततरु वारम्भ्रोल्लसद्ध लिभारंवरमतिरधिसार क्कोजहात्यस्तिहारम् ॥ १६ ॥ उटजमपि विधायत्वत्तटेदेविगङ्गेवसतिजितमनायो भैक्षवृत्तिर्म्मनुष्यः ॥ नृपतिमुकुटकोटिस्पृ ष्टपादाब्जपीठस्सुवसतिरपिसम्राट्तस्यकिं यातिसाम्यम् ॥ १७ ॥ तवतटकुहरेऽय न्दर्दुरस्सन्निषणस्सुर भिपवननीतत्वत्तर

ङ्गाम्बुसिक्तः ॥ सुरयुवतिगृहीतैश्चन्द्र
नार्द्रैस्सरत्नैः ॥ परिहसतिसुरेशंत्रीजिन
न्तालवृन्तैः ॥ १८ ॥ शरणगजनवाञ्छा
पूरणोदार्य्यपूर्णम्भगवति समुपैरयत्वत्तट
म्भाग्ययोगात् ॥ पुनरपिनिजमुक्तांस
न्दिहानाजनाये शिवशिवमतिरेपान्देविग
ङ्गेगताक्त्र ॥ १९ ॥ जननिपुलिनदेश
स्ते तरङ्गैर्विमुक्तस्सुरभिमृदुलशीतस्त्रा
न्तहद्यातयुक्तः ॥ वृहदजिनसमूहे रास्त
तोजन्हुकन्ये मुनिवरगणरम्यो नास्तिचे
तोहरःकिम् ॥ २० ॥ विबुधनदिकिमेते
रम्बुजन्मोपमैतेः परिलसदपवादे न्निष्फ
लैर्हन्तपादैः ॥ वृहदघहृतिधीरं स्वर्म्मद
ध्वांसतीरन्त वनसकृदयन्तेयसुधाऽथोरम

न्ते ॥ २१ ॥ सुरतटिनितटेतेगोहिरण्या
दिदानैः क्षितिविबुधवरान्येसादरन्तर्प्प
यन्ति ॥ उभयकुलपितॄंस्तेनोकिमुद्धृत्य
सद्यः पदममरदुरापङ्क्षाणतापंव्रजन्ति ॥
॥ २२ ॥ त्रिभुवनपरिधानन्तावकंवारिग
ङ्गे त्रिभुवनसुनिधानन्तावकंवारिगङ्गे
॥त्रिभुवननतिभूमिस्तावकंवारिगङ्गे त्रि
भुवनसुखभूमिस्तावकंवारिगङ्गे ॥२३॥
अपहरतियएकोदृष्टमात्रोजनाना ङ्कृत
गुरुदुरितानांरौरवाद्याधिकारम् ॥ त्रिदश
नदिमदीयंमानसंसानुराग म्भवतुमहति
तस्मिंस्तावकेवारिपूरे ॥ २४॥ तनुतरम
पिगङ्गेतावकंहन्तिनीर म्बहुजनिजनि
तानाम्पातकानांसमूहान् ॥ परिमितिप

रिहीणन्तूलराशिंनकिंवा दहतिकथयमा
नवह्निलेशोऽप्यशेषम् ॥ २५ ॥ सुरस
रिदतिदुरन्तावकंवारिपूरङ्क थमपिननु
चातोयातिसंस्पृश्ययत्र ॥ तदवनिसमुपे
ताजन्तवोऽप्यन्तकाले किमुनसुरवधूटी
मान्संमोदयन्ति ॥ २६ ॥ सकलभुवनपा
विस्वर्गमुख्यालयावि प्रग्लदरितलावि
स्वाववोधैकभावि ॥ शशिभृदलिकचारि
स्वान्तशंशुद्धिकारि द्युतटिनितववारिस्ता
न्ममैनोऽपहारि ॥ २७ ॥ अयिभगवति
गङ्गेदेविराजत्तरङ्गे गुणाजिवितमहेश
न्तावकंवारिलेशम् ॥ कथमपिदधनेयेप्रा
णिनोभालदेशे यमशिरसिपदन्तेकिन्न
धृत्वोद्वजन्ति ॥ २८ ॥ विबुधनदिशर

ण्येत्राणिनाञ्जन्हुकन्ये भगवतियदिदृष्ट न्तेऽम्बुकिन्तर्हिशिष्टम् ॥ तदपिहृदयरा गाद्र्हयोच्छित्तयेवा जननितवपयोभिःपा वयाम्येतदङ्गम् ॥ २९ ॥ कृतभुवनवि हारंशम्भुशीर्षप्रचारं निखिलनिगमसार न्देविसन्तोषकारम् ॥ समुपचितनदीन ञ्जीवनन्तावकीनं श्रयतुबहुलमीनम्मा नसम्मामकीनम् ॥ ३० ॥ अमृतममर लोकेदेविकेचिद्वदन्ति प्रचुरतरतरङ्गेके चिदेवेन्दुबिम्बे॥सुकविवचसिकेचित्कोचि देवाङ्गनौष्ठे त्रिभुवननुतमम्भस्ते स्ति तन्मेमतन्तु ॥ ३१ ॥ जनतितवपयोभि रसङ्गतानाञ्जनानां शशिभुजगपिना कव्याघ्रचर्म्मैणभूतीः ॥ दधदपिभवती

न्द्राक्सद्रूपद्वैवन्द्यङ्क्षि मुनपदमनन्तंशं
वमुद्यातिसद्यः ॥ ३२ ॥ पतितजनसमू
हान्भस्मलेशावशेषा न्सुरपतिसमभोगा
न्यत्करोतिस्वसङ्गात् ॥ तदपरिमितवी
र्य्यञ्चालितस्वर्गिधैर्य्यं म्मगवतिसलि
लन्ते माम्पवित्रीकरोतु ॥ ३३ ॥ सकृद
पिपरिपीयश्रीमदम्भःकणन्ते कथमपिन
नुजन्तुःकोपिवेधःप्रपञ्चे ॥ कृतवृहद्घवा
रप्राप्यदुर्दशसम्प न्मिहिरजपुरवासी
जातुकिञ्जायते म्व ॥ ३४ ॥ जननिज
ननहारञ्जन्मवारेव्यतीते त्वदमलजल
पानंनोमयाकारिजाने ॥ यदिहजनुषिमा
तुःकुक्षिवासोद्भवानां लसदसुखभराणाञ्च
र्णसाध्यकार्यम् ॥ ३५ ॥ भुवनजननर

क्षासंहतीराजसार्यै स्त्रिभिरपिकिलरूपैः कर्त्तुमीशो प्यनीशः ॥ महदिहमनुतेयं वैभवंस्वङ्गिरीश स्सभवतुसलिलौघस्ते स्त्वमत्सत्कृतीशः ॥ ३६ ॥ त्रिभुवनवस तीनान्धर्म्मकर्म्मोन्मतीना ङ्कृतसदुपकृ तीनान्त्वद्गतीनांयतीनाम् ॥ अमितजन नजातंमूर्तिमत्पुण्यमस्तु द्युतटिनितवनी रंमद्यवध्वंसधीरम् ॥ ३७ ॥ त्रिभुवनप तिरीशोन्यस्यभालेसुधांशुं निजशिरसि दधारत्वज्जलङ्गौरवाद्यत् ॥ सद्यजिन ह्निशक्तिप्रोच्यतेतत्सुधीभि स्सुमहदपि सुव्रातोदेविसौन्दर्यमस्य ॥ ३८ ॥ जल जजनिमुखेभ्यश्शुद्धिमद्यश्चतुर्भ्य स्सम धिगतजनुर्भिर्वेदैश्चतुर्भिः ॥ तवयदि

दममानिस्त्रन्नुसर्वस्वमम्भ स्स्फुरतुमम
तदेनः कर्दमक्षालनाय ॥ ३९ ॥ समभि
लपतिगङ्गेत्यामुपैतुंसकृद्य स्समभिलष
तिशक्रः प्रोद्धृतिन्तत्पितृणम् ॥ विहि
तमहहयेनस्नानमम्बत्वदीये पयसिहरि
दुरापंनेतिकिंसत्पदंसः ॥ ४० ॥ तवपय
सिदरिद्राअप्यहोयेकथञ्चि त्सकृदपिवर
भाग्यैः कुर्वतेस्नानमम्ब ॥ अमरपरिवृ
ढाद्यैःकम्रसत्कारनम्रे धृतवरशिविकान्ता
स्तेनकिंस्वर्विशन्ति ॥ ४१ ॥ विबुधस
रिदिदानीमद्वचस्संशृणुत्व न्त्वदमलज
लयोगः केवलम्पार्थिवंनो ॥ मलमपन
यतिद्रागप्यविद्याभिधानं वदकिमधिकम
स्मादस्तिपूतञ्जगत्सु ॥ ४२ ॥ तरुणत

रंदुद्योद्यत्कीलजालोरुलीला त्रिजयकुशल कामक्रोधसन्तापतप्तम् ॥ जननितवतरङ्गप्रोच्छलन्नृत्यभङ्गी भ्रुदमलजलविन्दो र्म्मेमनश्शान्तिमेतु॥४३॥ कापिलमुनिदृगुत्थक्रोधवैश्वानरोग्र स्फुरदपरिमितोद्यज्ज्वालभस्मीकृताङ्गैः ॥ सलिलवमहिम्ना ते र्य्यलब्धा मरत्वं दिविसगरतनूजैर्गीयसेकिन्नभक्त्या ॥ ४४ ॥ सुरसरिदिह लोकेभाग्यहीनोमनुष्य स्सकृदपिसलिले तेस्नातुकामो पिनायः ॥ दुरितनिचयंउच्चै स्सादरन्त्यक्तशङ्कम्भगवतिवदतेन प्रागभवेकोप्यधायि ॥ ४५ ॥ प्रतिदिन मिहतोयेतावकीनेनिमज्ज न्परिचितदुरितौघान्दूरतश्चाशुमुञ्चन् ॥ निरयगपित

पूगान्स्वर्गताँश्चापिकुर्वं स्त्यजतिजननि
योऽसूंस्तस्यभाग्यंवदेकः ॥ ४६ ॥ सुर
सरिदुपविश्यत्वत्तटेपुण्यलब्धे विदधतित
वतोयैस्तर्प्पणंयेपितॄणाम् ॥ पितरउततदी
याःक्षीणपापादुरापान् हरिहरविधिलोका
नुसक्तनाःकिन्नयान्ति ॥ ४७ ॥ अमृत
विजयिमिस्तेपात्रनेदेवितोयै रतिरुचिर
मिहान्नंसंस्कृतम्भोजयित्वा ॥क्षितिविबुध
वरान्येतर्प्पयन्तिप्रमोदा दुभयकुलपितॄं
स्तेस्वर्नकिम्प्रापयन्ति ॥ ४८ ॥ त्रिदिव
धुनिमुनीनांमानसाल्हादसम्प ज्जननप
टुतरन्तेतीरमासाद्यमर्त्यः ॥ दुरितहरण
दक्षंयावदम्भस्तवैत त्पिबतिनाकमुताव
न्मुक्तिपात्रत्वमेति ॥ ४९ ॥ नवपय्यसिप

चित्रेचित्रचञ्चच्चरित्रे निहितचरमकाय स्संस्मृतैकोरुगायः ॥ व्यसुरहहभवेद्यः पुण्यजन्मा तिधन्य स्सकिमुनभवतिद्राग्द्रे विमुक्ताग्रगण्यः ॥ ५० ॥ भगवतिनयना भ्यांनिष्फलाभ्याङ्किमाभ्यां हरिचरणनिसृष्टन्तेम्बुयाभ्यांनदृष्टम् ॥ श्रुतिभिरपि किमाभिर्न्नैश्रुतन्दोवियाभि दुरितनिचय हारित्वद्यशःपुण्यकारि ॥ ५१ ॥ किमम रनदिहस्तैश्चर्म्मखण्डादशास्ते स्सुकृतल वनिरस्तैरङ्गुलिभिस्समस्तैः ॥ अपरि मितमहाघप्रोदधुरोत्साहभित्ते भगवति जललेशो धारितोयैःकदाचित् ॥ ५२ ॥ भगवतिपयसातेस्वार्गिभिर्दुर्ल्लभेन स्स्पति दरिनहरेणश्रीप्रदस्पर्शनेन ॥ सकलमह

हृयेषाञ्जायतेकर्म्मतेषा ङ्किमुकथयितुं मीशः पुण्यराशिम्फणीशः ॥ ५३ ॥ पुर हरपुरवासप्रेमहेतुस्त्वमेव पुरहरपुरशोभा भारहेतुस्त्वमेव ॥ पुरहरपुरवासिक्षेमहेतुं स्त्वमेव पुरहरपुरसारञ्जन्हुकन्येस्त्वमेव ॥ ॥ ५४ ॥ विबुधनदिमिलित्वाऽयन्त्वयैवप्र यागः प्रभुरभवदयत्नात्तीर्थवृन्दस्यसद्यः गिरिपरिवृढकन्याभीतचिन्तो पिशम्भु ङ्शिरसिवसतिमुच्चैर्दत्तवान्नैवतेकिम् ॥ ॥ ५५ ॥ करटनिशितचञ्चूभिन्ननेत्रप्र देशो लसदुदरगुरुत्वःकीर्णकेशोऽचलाङ्ग गः ॥ त्वदमलवितताम्भोरम्यशय्यइश वो यं वदखलुकमकार्षीजन्हुजेपुण्यपुञ्ज म् ॥ ५६ ॥ परिहृतसुतदारप्राज्यराज्य

प्रसङ्गा हरिविधिसुरराजस्थानलिप्सा
विहीनाः ॥ मणितृणसमचित्तामानवाञ्छा
निनोपि त्वयिभगवतिगङ्गेलोभिनश्चित्र
मेतत् ॥ ५७ ॥ गामितिननुकथञ्चिन्मान
वः कोपिगङ्गे पारिपठतियदेवक्कापिदे
शोस्थितोयः ॥ वदकिमुनतदीयाः पापपु
ञ्जास्तदैव स्फुरदनुपमकम्पाद्दूरतोविद्रव
न्ति॥५८॥विबुधपतिपुरोगाःप्रोल्लसद्दिव्य
भोगास्सुरनदिभगवत्यादेविजातोभवत्या
जननिजगतिधर्म्मोलालितोऽयन्त्वयैव व्र
जतिसपरिवारः विद्भगर्वीम्प्रतिष्ठाम् ॥
॥५९॥ स्मरतिजननियस्त्वाञ्जायतेसो
तिपूतस्तवपयसिचगङ्गस्नातियश्शङ्कर
स्सः पिबतितवजलंयस्सोस्तिमातः परा

स्मावसनिचतवतीरियोनयानेसकोऽस्ति॥
॥ ६० ॥ अतिकटुतरनाम्नामेनसामाश्र
यायेनिजकुलजनमुक्ताःक्काऽपिनास्थाङ्ग
ताये ॥ भगवतिसुरवन्द्यतेऽतिगुण्यांशर
ण्याङ्घ्रिमथनसमुपेत्य त्वाम्भवन्तिप्रती
क्ष्याः ॥ ६१ ॥ जननिमदधिकः कः पा
पकर्म्माऽस्तिलोके जननिमदधिकः कः
क्षीणधर्म्माऽस्तिलोकः ॥ जननिसमधि
कः कस्त्वद्विधाताविशुद्धे जननिसमधि
कः कस्त्वत्प्रदातामस्कृद्धेः ॥ ६२ ॥ वि
विधकुसुमजाले देविमाम्भोजमाले बहु
भिरपिविशालैः क्षीरकुम्भैरसालैः ॥ रस
भरपरिपूर्णैर्भक्ष्यभोज्यादिभिर्य स्सुरनदि
यजतेत्वा इकोवदेत्तस्यपुण्यम् ॥ ६३ ॥

कुशलमिददानान्तेजसादीप्यमानां व्राजि
नदमनशक्तिञ्जातभक्तानुरक्तिम् ॥ सकृ
दपिभवतीयेदेविगङ्गेभजन्ते किमुनक
लिकराश्रा न्तेविमुक्ताभवन्ति ॥ ६४ ॥
यदवधिकिलगङ्गेप्रादुरासीद्वपुस्ते तदव
धिनिरयाणांशून्यता भूश्रितान्तम् ॥ तद
वधिपुनरम्बस्वर्गभूर्भूरिशोभा तदवधिज
गदण्डन्देऽव्यखण्डंविदण्डम् ॥ ६५ ॥ स
कलदिविषदांयःपीडयत्येवचित्त ङ्कथम
पिकिलगङ्गेदूरदेशेश्रुतोऽपि ॥ अपिच
निगमाब्धिर्देवियोऽप्राकृतोऽस्ति प्रभवति
सउपेत्यत्वां · नकिन्ताद्विशुद्ध्यै ॥ ६६ ॥
त्वयिसुरनदिदृष्टायाऽव्यदुर्नीतिरुच्चैरहहन
भुवनेसाकाऽपिसत्यम्ब्रवीति ॥ पशुपतित

पुलिन्दव्रात्यहीनान्त्यजेभ्यो दिशसियदप
रीक्ष्यप्रेक्षणादेवमुक्तिम् ॥ ६७ ॥ मृदुल
हृदयभित्तप्रोल्लसत्पुण्यवृत्तेत्वदमलजल
वित्तेमामकेदेवि चित्ते विहितकलुषभङ्
गेजातुचिन्ताऽस्तुगङ्गेकथमपिसमुपेक्षा
सन्निधेस्सन्निधेस्ते ॥ ६८ ॥ सकलध
रणिजातन्तीर्थजातंसुजातं ननुकृतसमुपे
क्षन्देविजातंमयाऽद्य त्वयिसुरनदिसत्या
मत्रकस्याऽऽदरस्स्तात्सति दिनकरविम्बे
काकथादीपकानाम् ॥ ६९ ॥ तवविमल
समाख्यागानमात्रेणगङ्गेतदिहनतुलभन्ते
मानवावस्तुकिञ्चित् ॥ बहुभिरपितपोभि-
श्चाथसर्वस्वदानैर्नकिलसकलतीर्थस्नान
तोलभ्यतेयत् ॥ ७० ॥ विधिविहितसप

र्य्यांह्रिपाणुपादात्सरन्ती त्रिपुरहरजटायांस
न्ततंसञ्चरन्ती ॥ तुहिनगिरितटान्तान्मे
दिनीमाव्रजन्तीजननि विजयसेत्वंविष्टप
म्पावयन्ती ॥ ७१ ॥ त्रिजगतितवकीर्त्ति
र्भासमानासमाना त्रिदशसरिदनेकैश्शोभ
तदेविरूपैः ॥ क्वचिदमरगजेन्द्रः क्वाऽप्य
नन्तःफणीन्द्रः क्वचिदपिचसितांशःकुत्र
चित्क्षीरसिन्धुः ॥ ७२ ॥ हरिहरविधिमु
ख्यान्केचिदर्चन्तिसगाल कतिचिदिहत
पोभिःकुर्वतेकायकाठर्यम् ॥ विविधकृतिक
लापान्केऽपिकुर्वन्तियज्ञान्विबुधनदिवि
नात्वांनैवजानेऽहमन्यत् ॥ ७३ ॥ शृणुभ
गवतिगङ्गेमामकंवाक्यमेतत्त्रिदिवसरिद
यन्तेजृम्भतेकिंस्वभावः॥पतितमपतितंवा

यन्नरंवाखरंवातटगतमपरीक्ष्यस्वर्ग्गंयोग्य
ङ्करोषि॥७४॥ उदयतियदिबुद्धिर्य्यस्यपु
ण्यै कराशेस्सुरधुनितवदृष्टौप्रस्फुरद्भाग्य
भारैः॥ त्रिदिवपरिवृढोऽयन्तत्सपर्य्याकृत
किंसुरदुराधिमानो संविधास्स ज्चिनोति
॥ ७५ ॥ सुरतटिनिभवत्यांशर्वसौभाग्य
वत्यञ्जितसुमतिपवित्रंयन्मयाऽ दर्शिचि
त्रम् ॥ नकिलतदितरास्मिनूयन्मुरारेःपदे
नस्फुटमहहविही न्नतन्निजेभ्याददासि
॥ ७६ ॥ तरुणधवलरश्मिप्रस्फुरत्स्याण्ड
रांशुव्रज विजयधुरीणप्रोल्लसत्सत्तरङ्गे
॥ वरविभवविहङ्गेऽनङ्गऽविद्वेषिसङ्गे
कुरुममभवभङ्गेशेमुषीन्दोविगङ्गे॥७७॥
कतिचनसुरसिन्धोप्राणिनः पुण्यवन्तस्त्व

यिपरिहृतदेहास्स्वर्ग्गगेहाभवन्ति ॥ कति
चनशिववन्धोर्ब्रूहि जायन्तएनेश्रुतिपथवि
गताख्यानिर्न्निकेताः किमेतत् ॥ ७८ ॥
त्रिदिवधुनिमुनीन्द्रैर्म्मानवेन्द्रैस्सुरेन्द्रैः प
रिणुतगुणपुञ्जमानसाकर्षिकुञ्जे ॥ निज
शिरसिभवेनप्रोल्लसद्वैभवेनप्रचुररुचिधृता
ह्लीत्वम्भवंहंसिकिन्नु ॥७९ ॥ वितरतिनि
जदेहंसर्वदुर्ग्गन्धगेहन्त्रिभुवनभगवत्यैय
श्शरीरीभवत्ये ॥ शशिमृगव्रपनागव्याघ्र
चर्म्मादिरम्यान्दिशसिकिमितितस्मै शा
ङ्करीन्देविमूर्तिम् ॥८० ॥ अगणितजनि
जातप्रोत्कटैनोनिवृत्त्यै सुरनदियदिभूमा
वात्रजिष्योनचत्वम् ॥ अतिपातितजनौघ
व्याप्त्यकम्या प्यगम्या कथमियमभवि

ष्यत्सर्वसौभाग्यरम्या ॥ ८१ ॥ यदवधि
तवमातस्सर्वपापापहृत्यै दृढपरिकरता भू
दात्मसेवापराणाम्॥ तदवधिरविसूनोःपत्त
नम्पाशवद्धाः करुणमतिरुदन्तः केगता
स्सेवकास्ते ॥ ८२ ॥ स्वचरितदुरिताशु
ध्वंससामर्थ्यवत्या हृतकलुषविशेषान्दूर
देशान्भवत्या ॥ खरकरसुतदूतादण्डपा
शादिहस्ताः कथयकथमयन्तेपापिनो न्वि
ष्यधर्तुम् ॥८३॥ यनदिवियतियत्रप्रागद
र्शिक्वचिन्नो सविबुधसुवधूटीदिव्यगानं
विमानम् ॥ दरमुरजविपञ्चीदुन्दुभिध्वा
नरम्यैः किमितिनतदिदानीन्दृश्यतेसङ्कु
लन्तैः ॥ ८४ ॥ वितरितबहुकृच्छ्रैः किम
मास्तीहकृच्छ्रै रमरधुनिवराकैः किम्पुनर्मे

पराकैः ॥ शिववितरणधन्यैर्देववितीर्थैः कि
मन्यैःप्रभवसियदिलोकेत्वंहताशेषशोके ॥
॥ ८५ ॥ त्रिदिवनदिमदीयंमानसंवाञ्छ
तीदङ्किमितिचयादिमत्तः पृच्छसित्वंशृ
णुष्व ॥ सरदसुविगमावागस्तुनत्वद्वियो
गो लुठतुचवपुरेतत्त्वय्यसूनाम्प्रयाणे ॥
॥ ८६ ॥ शृणुशृणुममगङ्गेप्रार्थनावाक्य
मेतत्कुरुकुरुमयिमातस्सानुकम्पंमनस्त्वम्
॥ मनसिमनसिजार्त्तैर्म्मैनिधेहिप्रशान्तिं
वितरवितरमह्यंमङ्क्षुकैवल्यमुक्तिम् ॥
॥ ८७ ॥ अमरनदिभवत्यानामगङ्गेति
पूतं सकृदपिमनुजोयोभाषतेन्तेकथञ्चित्
॥ किमितिकिमितिपात्रीभूतनागोरुदैहैर्व्य
थयसिगलगेहे स्तंसनारुह्यशीर्षम् ॥

॥ ८८ ॥ हरिपदजनितस्ते शम्भुकेशैक
बन्धा ज्जलधिशिखरिपुत्र्योर्ग्गेत्वयोर्विवा
दम् ॥ जननिपरिहरन्तीं स्वाम्बुपानादि
रक्ता न्हरिगिरिशतनूका न्कुर्वतींत्वाम्प्र
पद्ये ॥ ८९ ॥ त्वदधिगममनसस्का स्त्य
क्ततेजस्तमस्का स्स्वनियतिपरतन्त्रा ज
प्तगौरीशमन्त्राः ॥ जननिपथिमृतायेस
त्पदेतेऽनपाये. किमुनहरिसमानाभान्तिस
न्नेस्समानाः॥९०॥निजजनशुभचेतोधर्म्म
कर्म्मैकहेतो भवजलनिधिसेतोमोक्षसम्प
त्तिकेतो ॥ तवगुणनिकुरम्बंनोययागीतम
म्ब त्रिदिवधुनितयेह व्यर्थयाजिह्वयाकि
म् ॥ ९१ ॥ व्यपगतसुविवेकाः पूर्वजन्मा
घभारे रविरतनिरयस्थाः किंनजायन्तए

तें ॥ भुवननुतगुणायान्त्रय्यजाद्यार्चिता
या मितरसरितिवाहो येमतिङ्कुर्वतेऽम्ब
॥ ९२ ॥ बहुभिरपिकिमेभि र्दैविधान्यैर्द
नैर्वा धृतिमतिकुलशीलैः किंनयाचार
शौर्यैः ॥ यमनियमतितिक्षा दानदाक्षि
ण्यमुख्यैःकिमथनहृदयेचेत्तेऽम्बजागर्त्तिभ
क्तिः ॥ ९३ ॥ हरिरसरलदाष्टिर्दत्तपृष्ठो
गिरीशो विधिरपिविधिशून्यो दीनदीनो
दिनेशः ॥ निखिलमपिचतीर्थं न्यङ्मुखं
यस्यशुद्धौ जननिविजयसेत्व न्तान्दिवम्प्रा
पयन्ती ॥ ९४ ॥ विधिकृतसुकृतानाञ्जा
यतेस्वर्न्निवासो दुरितरतमतीनान्दुर्ग्गतो
चाप्यवश्यम् ॥ सकलमुदितमेतत्तत्रयत्रा
स्तिनाम्ब त्रिभुवनसुपवित्रासच्चरित्राक

याते ॥ ६५ ॥ प्रतिकृतिमभिरूपान्ते म्बनि
र्दिष्टरूपा ङ्कुशलरचितउच्चै र्म्मन्दिरे
स्थापयित्वा ॥ सविधिसदुपचारैःप्राच्य॑यः
स्तौतिभावात्सकिमुनगतशोकेतावकेयाति
लोके ॥ ६६ ॥ सुविमलविधयस्तेपुण्यव
न्तस्तएवश्रुतिविहितसपर्य्या नापितेशा
स्तएव ॥ त्रिजगतिसुधियस्तेसत्समज्ञा
स्तएव स्थिरतरसुखदात्वम्भक्तितस्सेवि
तायैः ॥ ६७ ॥ श्रुतिभिरपिसहाङ्गैस्से
तिहासैःपुराणैस्स्मृतिभिरुपपुराणैस्सत्प्रब
न्धैर्न्निबन्धैः ॥ तनुमपिमहिमानंशक्यतेते
नगातुंयदितदतिवराकी गीर्म्मदीयाऽम्ब
काऽत्र ॥ ६८ ॥ गुणकणमपिगङ्गेताव
कीनंमनुष्योविमलतरगुणौघे स्तौतियोभ

क्तिभावात् ॥ सभवतिकृतकृत्योदेवितद्गीः
कृतार्था सुकविसदसिगुर्वीमतिचासौप्रति
ष्ठाम् ॥ ९९ ॥ तवननुनुतिमेतांस्वस्तर
ङ्गिण्यकार्षनजननिनिजकीर्त्यैदावसित्य
म्ब्रवीमि ॥ विविधवहुलमिथ्यावादकालु
ष्यपूर्णाम्भगवति निजवागीङ्किन्तुशुद्धां
विधातुम् ॥ १०० ॥ शरणगजनवन्धोदे
वकारुण्यसिन्धो तुहिनकिरणमौलेसर्वदेवै
कमौले॥परिमितिशतसङ्ख्याः पद्यगङ्गा
लहर्य्यस्तवगिरिशजटायांमालिकाःप्रोल्ल
सन्तु ॥ १०१ ॥ सर्वदांसर्वदादेवादेवाङ्ग
गङ्गांस्तुवन्तियाम् ॥ भोगमोक्षाभिला
षीतां स्तोतुकामोनकोभुवि ॥ १०२ ॥ ग
ङ्गालहरीशतकेयः श्रुतिजिह्वामनांसिम

ज्जयति सभवतिगङ्गास्नार्यास्यपिलसमु
द्धारकश्चासौ ॥ १०३ ॥ पातालाग्न्यङ्क
पृथ्वीपरिमितिकलितेवैक्रमेनन्दने ऽब्देमा
घेशुक्लेऽथपक्षेसुरगुरुदिवसेऽहेस्तिपूर्थौसद्
गुणायाम् ॥ लक्ष्मीनारायणस्यप्रमथपति
पदद्वन्द्वसंसेविनोमेश्रीशम्भोराजधान्याङ्
कृतिरितिसमगात्पूर्णताङ्काशिकायाम् ॥
॥ १०४ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव
सारस्वतकुलतिलक सकलविद्यारत्नाकर
पण्डितठाकरदत्त शर्म्मान्तेवासिलक्ष्मीना
रायणाह्वयकविवरविरचितं श्रीगङ्गाल
हरीशतकंसम्पूर्णम् ॥ ॥ ॥ ॥ ॥



## ॥ गंगास्तोत्रप्रारम्भः ॥

श्रीगणेशाय नमः ॥ चतुर्भुजांत्रिनेत्रां
चसर्वावयवशोभिताम् रत्नकुम्भासितांभो
जवरदाभयसत्कराम् ॥ १ ॥ श्वेतवस्त्रप
रीधानांमुक्तामणिविभूषिताम् एवंध्यायेत्सु
सौम्यांचचंद्रायुतसमप्रभाम् ॥ २ ॥ चा
मरैर्वीज्यमानांच श्वेतच्छत्रोपशोभिताम्
सुप्रसन्नांचवरदां करुणार्द्रांनिरंतरम् ॥
॥ ३ ॥ सुधाप्लावितभूपृष्ठां दिव्यगंधा
नुलेपनाम् त्रैलोक्यनमितांगंगां सर्वदेवैर
धिष्ठिताम् ॥ ४ ॥ दिव्यरत्नविभूषांच
दिव्यमालाविभूषिताम् ॥ ध्यात्वाजले

यथाप्रोक्तंतथाचार्यांप्रपूजयेत् ॥ ५ ॥ ॐ
नमोभगवतिऐंहिलि २ मिलि २ गंगेमां
पावय २ स्वाहा २७ मंत्रेणानेनागमोक्ते
नपंच पुष्पांजलीन् श्रीगंगायैनिवेदयेत्
श्रीखंडचंदनंदिव्यं गंधाढ्यंसुमनोहरम्
विलेपनंसुरश्रेष्ठे प्रीत्यर्थंप्रतिगृह्यताम् ॥
॥ ६ ॥ माल्यादीनिसुगंधीनिमालत्यादी
निवैप्रभो मयाहृतानिपुष्पाणि पूजार्थंप्रति
गृह्यताम् ॥ ७ ॥ दशांगंगुग्गुलुंधूपंसुगं
धंचमनोहरम् गंगेदेविनमस्तेऽस्तुगृहाणव
रदाभव ॥ ८ ॥ गृहाणमंगलंदीपंघृतवर्ति
समन्वितम् ॥ रुद्ररूपेनमस्तेस्तुगृहाणवर
दाभव ॥ ९ ॥ अन्नंचतुर्विधंस्वादुरसैः ष
ड्भिःसमन्वितम् ॥ नैवेद्यंगृह्यतांदेविभ

क्किंमेह्यचलांकुरु ॥ १० ॥ परदारपद्रव्य
परद्रोहपराङ्मुखः ॥ गंगाक्नूलेकदागत्यमा
मयंपावयिष्यति ॥ ११ ॥ इतिवैश्वानर
नारदसंवादेदशपापहरायाः श्रीगंगायाः
ध्यानार्चनविधिः एवंतांविधायपश्चाज्जलां
तरेस्थित्वाज्येष्ठमासेसितपक्षेप्रतिपदादिद
शमीपर्यंतंदशविधपापप्रणाशनार्थमुत्तरोत्त
रनित्यवृद्ध्यास्तोत्रपाठमहंकरिष्ये ॥ ॥ ॥
॥ ॐब्रह्मोवाच ॥ नमःशिवायैगंगायैशि
वदायैनमोनमः ॥ नमस्तेविष्णुरूपिण्यैब्र
ह्ममूर्त्यैनमोस्तुते ॥ १ ॥ नमस्तेरुद्ररूपि
ण्यैशांकर्यैतेनमोनमः ॥ सर्वदेवस्वरूपि
ण्यैनमोभेषजमूर्तये ॥ २ ॥ सर्वस्यसर्वव्या
धीनांभिषक्श्रेष्ठेनमोस्तुते ॥ स्थावरजं

गमसंभूतविषहंत्र्यैनमोनमः ॥ ३ ॥ सं
सारविषनाशिन्यैजीवनायैनमोस्तुते ॥ ता
पत्रितयसंहर्त्र्यैप्राणेश्वर्यैनमोनमः ॥ ४ ॥
शांतिसंतानकारिण्यै नमस्तेशुद्धमूर्तये ॥
सर्वसंशुद्धिकारिण्यैनमः पापारिमूर्तये ॥
॥ ५ ॥ भुक्तिमुक्तिप्रदायिन्यैभद्रदायैनमो
नमः ॥ भोगोपभोगदायिन्यै भोगवत्यैन
मोनमः ॥ ६ ॥मंदाकिन्यैनमस्तेऽस्तुस्वर्ग
दायैनमोनमः ॥ नमस्त्रैलोक्यभूषायैत्रिप
थायैनमोस्तुते ॥ ७ ॥ नमस्त्रिशूलसंस्था
यैक्षमावत्यैनमोनमः ॥ त्रिहुताशनसंस्था
यैतेजोवत्यैनमोनमः ॥ ८ ॥ नंदायैलिंग
धारिण्यैनारायण्यैनमोस्तुते ॥ नमस्तेवि
श्वमुख्यायैरेवत्यैतेनमोनमः ॥ ९ ॥ वृह

त्यैतेनमस्तेस्तुलोकधात्र्यैनमोनमः ॥ न
मस्तेविश्वमित्रायै नंदिन्यैतेनमोनमः ॥
॥१०॥ पृथिव्यैशिवामृतायैचसुरूपायैनमो
स्तुते॥परपरश्शताढ्यायैतारायैतेनमोनमः
॥ ११ ॥ पाशजालनिकृंतिन्यैह्यभिन्नायै
नमोनमः ॥ शांतायैचवरिष्ठायैवरदायैन
मोनमः ॥ १२ ॥ उच्चायैसुखजग्ध्यैच सं
जीविन्यैनमोनमः ब्रह्मिष्ठायैब्रह्मदायैदुरि
तघ्न्यैनमोनमः ॥ १३ ॥ प्रणतार्तिप्रभं
जिन्यैजगन्मात्रेनमोस्तुतेसर्वापत्प्रतिपक्षा-
यैमंगलायैनमोनमः॥ १४॥ शरणागतदी
नार्तपरित्राणपरायणे सर्वस्यार्त्तिहरेदेवि
नारायणिनमोस्तुते ॥ १५ ॥ निर्लेपायैदु
र्गहंत्र्यैदक्षायैतेनमोनमः॥ परापरपरेतुभ्यं

नमस्तेमोक्षदेसदा ॥ १६ ॥ गंगेममाग्र
तोभूयागंगेमेदेविपृष्ठतः ॥ गंगेमेपार्श्वयो
रेधित्वयिगंगेस्तुमेस्थितिः ॥ १७ ॥ आ
दौत्वमंतेमध्येचसर्वत्वंगांगतेशिवे ॥ त्वमे
वमूलप्रकृतिस्त्वंहिनारायणीपरा ॥ १८ ॥
गंगेत्वंपरमात्माचाशिवस्तुभ्यंनमःशिवे॥य
इदंपठतिस्तोत्रंभक्त्या युक्तोनरः सुधीः ॥
॥ १९ ॥ शृणोतिश्रद्धयायुक्तः कायवाक्
चित्तसंभवैः ॥ दशधासंस्थितैर्दोषैःसर्वैरेव
प्रमुच्यते ॥ २० ॥ रोगस्थोमुच्यतेरोगा
दापद्ध्यश्चप्रमुच्यते ॥ सर्वान्कामानवाप्नो
तिप्रेत्यब्रह्मणिलीयते ॥ इमंस्तवंगृहेयस्तु
लेखयित्वाविनिक्षिपेत् ॥ नाग्निचौरभयंत
स्यपापेभ्योपिभयन्नहि ॥ २२ ॥ ज्येष्ठमा

सेसितेपक्षेदशमीहस्तसंयुता ॥ संहरेत्
त्रिविधंपापंबुधवारेणसंयुता ॥ २३ ॥ त
स्यांदशम्यामेतच्चस्तो त्रंगंगाजलेस्थितः
यःपठेद्दशकृत्वस्तु दरिद्रोवापिचाक्षमः ॥
॥ २४ ॥ सोपितत्फलमाप्नोतिगंगांसंपूज्य
यत्नतः ॥ पूर्वोक्तेनविधानेनयत्फलंसंप्रकी
र्तितम् ॥ २५ ॥ यथागौरीतथागंगातस्मा
द्गौर्यास्तुपूजने ॥ विधियोविहितःसम्य
क्सोपिगंगाप्रपूजने ॥ २६ ॥ यथाशिव
स्तथाविष्णुर्यथाविष्णुस्तथाह्युमा ॥ उमा
यथातथागंगा चतूरूपंनभिद्यते ॥ २७ ॥
विष्णुरुद्रांतरंयच्चश्रीगौर्योरंतरंतथा ॥ गं
गागौर्योरंतरंचयोब्रूतेमूढधीस्तुसः ॥२८॥
अंतरंनैववक्तव्यमाग्रहाद्वदतेयदि ॥ रौर

वादिषुघोरेषुनरकेषुपतत्यधः ॥ २९ ॥ अद
त्तानामुपादानंहिंसाचैवविधानतः ॥ पर
दारोपसेवाचकायिकंत्रिविधंस्मृतम्॥३०॥
पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः असं
बद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम्॥३१॥
परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् ॥
वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम्॥
॥ ३२ ॥ एतानिदशपापानिहरत्वंममजा
न्हवि ॥ दशपापहरायस्मात्तस्माद्दशहरा
स्मृता ॥ ३३ ॥ एतैर्दशविधैःपापैःकोटि
जन्मसमुद्भवैः ॥ मुच्यतेनात्रसंदेहोब्रह्म
णोवचनंयथा ॥ ३४ ॥ दशात्रिंशच्छता
न्सर्वान्पितॄनथपितामहान् उद्धरत्येवसं
सारान्मंत्रेणानेनपूजिता ॥ ३५ ॥ ॐनमः

शिवायैनारायण्यै दशहरायैगंगायैस्वाहा
ज्येष्ठेमासे सितेपक्षे दशम्यांबुधहस्तयोः
गंगनंदव्यतीपाते कन्याचंद्रेवृषेरवौ ३८॥
दशयोगेनरःस्नात्वा सर्वपापैःप्रमुच्यते सि
तमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रां करधृतक
लशोद्यत्सोत्पलाभीत्यभीष्टाम् विधिहरि
हररूपांसंदुकोटीरजुष्टां कलितसितदुकू
लांजान्हवींतांनमामि ॥ ३७ ॥ आदावा
दिपितामहस्यनियम व्यापारपात्रेजलं प
श्चात्पन्नगशायिनोभगवतः पादोदकंपा
वनं भूयःशंभुजटाविभूषणमणि र्जन्होर्म
हर्षेरियं कन्याकल्मषनाशिनीभगवती भा
गीरथी दृश्यते ॥ ३९ ॥ विष्णुपादाब्जसं
भूते गंगेत्रिपथगामिनी ब्रह्मद्रवेतिविख्य

ता पापंमेहरजाह्नवि ॥ ३९ ॥ जाह्नवीस
र्वतः पुण्याब्रह्महत्यापहारिणिवाराणस्यांवि
शेषेणगंगाचोतरवाहिनी ४० ५२ इति
स्कंधपुराणेकाशीखंडेदशहरास्तोत्रम्

# अथ त्रिवेणी स्तोत्र प्रारम्भः ।

ॐश्रीगणेशाय नमः ॥ ॐमुक्तामयालं
कृतमुक्तवेणीभक्त्याभवेत्राणविरूढवेणी ॥
मत्तालिगुंजन्मकरंदवेणी श्रीमत्प्रयागेज
यतित्रिवेणी ॥ १ ॥ लोकत्रयैश्वर्य्यनिदा
नवेणी तापत्रयोच्चाटनिदानवेणी ॥ धर्मा
र्थकामाकलनैकवेणी श्रीमत्प्रयागेजयति ।

त्रिवेणी ॥ २ ॥ मुक्तांगनामोहनसिद्धवे
णी ॥ भक्त्युन्मदामोदसुवर्णवेणी वृत्यं
तरोद्वेगविचित्रवेणी ॥ श्रीमत्प्रयागेजय
तित्रिवेणी ॥ ३ ॥ दुग्धोदधिस्फूर्तिसुभद्र
वेणी ॥ लीलांबुशोभाललितार्थवेणी ॥ स्व
र्णप्रभाभासुरमध्यवेणी श्रीमत्प्र० ॥ ४ ॥
विश्वेश्वरोत्तुंगकपालवेणी ॥ विरंचिविष्णु
प्रणतैकवेणी ॥ पुराणतन्त्रार्थगतैकवेणी ॥
श्रीमत्प्रयागेजयतित्रिवेणी ॥ ५ ॥ मांग
ल्यमंगल्यसमृद्धवेणी ॥ परापरायात्कल्हा
रवेणी ॥ श्रीमत्प्रयागेजयतित्रिवेणी । ६ ।
निमज्जनोन्माज्जिमनुष्यवेणी ॥ भक्तोदये
भाग्यकरैकवेणी ॥ स्फुर्त्तिजन्मादिभयैकवे
णी ॥ श्रीमत्प्रयागेजयतित्रिवेणी ॥ ७ ॥

स्वर्गोत्तिरस्कारविधातृवेणी॥कालिंदकन्या मयकृष्णवेणी॥ भागीरथीरूपमहेशवेणी॥ श्रीमत्प्रयागेजयतित्रिवेणी ॥ ८ ॥ सौंदर्य्यवेणीसुरसंघवेणी माधुर्य्यवेणीसहमीप वेणी रसैकवेणीरमणीयवेणी श्रीमत्प्रयागे जयतित्रिवेणी ॥ ९ ॥ श्रीमद्भवानीशवशीकवेणी लक्ष्मीसरस्वत्यभिमंत्रवेणी सत्तन्त्रवेणीत्रयरत्नवेणी श्रीमत्प्रयागेजयतित्रिवेणी ॥ १० ॥ त्रिवेणीदशकंस्तोत्र साय प्रातः पठेन्नरः ॥ तस्यवेणीसुसंतुष्टाददात्यर्थंत्कलुष्यम्॥ ११ ॥ इतिश्रीशंकराचार्यविरचितं त्रिवेणीस्तोत्रंसंपूर्णम् ॥



# अथ लक्ष्मी नृसिंह स्तोत्र प्रारम्भः ।

ॐस्वस्तिश्रीमन्नृसिंहायनमः ॥ ब्रह्मोवाच ॥ अनेकमन्त्रकोटीशं नृसिंहनामसमुच्चरेत् ॥ अन्योविधिःक्षयंयातिविषरोगादिनिवारणे ॥ १ ॥ ॐअस्यश्रीलक्ष्मीनृसिंहमन्त्रकवचस्य ब्रह्माऋषिः ॥ अनुष्टुप्छन्दः ॥ क्ष्रौंबीजम् ॥ रौंशक्तिः ॥ क्लींकीलकम् ॥ श्रीनृसिंहोदेवता ॥ सर्वरोगसर्वदेवभयचौरपन्नगव्याघ्रवृश्चिकभूतप्रेतपिशाचशाकिनीडाकिनीयन्त्रमन्त्रकृत्यादिनिवारणार्थेजपेविनियोगः ॥ ॥

ॐक्षौंअङ्गुष्ठाभ्यांनमः ॥ ॐप्रौंतर्ज्जनी भ्यांनमः ॥ ॐह्रौंमध्यमाभ्यांनमः ॥ ॐ रौंअनामिकाभ्यांनमः ॥ ओंव्रौंकनिष्टिका भ्यांनमः ॥ ओंक्षौंकरतलकरपृष्ठाभ्यांनमः इतिकरन्यासः ॥ ओंक्षौंहृदयायनमः॥ ओं प्रौंशिरसेस्वाहा ॥ ओंह्रौंशिखायैवषट् ॥ ओंरौंकवचायहुम् ॥ ओंव्रौंनेत्रत्रयायवौष ट् ॥ ओंक्षौंअस्त्रायफट् ॥ इतिहृदयादि न्यासः ॥ अथध्यानम् ॥ सत्यज्ञानसुख स्वरूपममलक्षीराब्धिमध्यस्थितं योगा रूढमतिप्रसन्नवदनम्भूषासहस्रोज्ज्वलम्॥ पीनेष्वाससुदर्शनाभयवरान्बिभ्राणमर्कच्छ बिम्बत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृ सिंहम्भजे ॥ १ ॥ ओंक्ष्रौंप्रौंह्रौंरौंव्रौंज्रौंन

मः ॥ १ ॥ ओंनमोनृसिंहाय सर्वदुःखवि
नाशनायसर्वजनमोहनायसर्वराज्यं वश्यङ्
कुरुकुरु ॥ २ ॥ ओंनमोनृसिंहायसिंहाय
सिंहराजाय नरकेसरिणेनमोनमः ॥ ३ ॥
ओंकालायदंष्ट्राकरालाय करालवदनायो
ग्रायोग्रवीर्यायोग्रविकटायवज्रदेहिनेरुद्राय
रुद्रवैरायभद्रायभद्रकारिणे ॥ ४ ॥ ओं
ज्रींह्रींनृसिंहायनमःस्वाहा ॥ ५ ॥ ओंन
मोनृसिंहायकपिलसटायामोघवाचायसत्य
म्वृत्तमाख्याहिमह्यम् ॥ ६ ॥ ओंउग्रच
ण्डरूपाय ॥ ७ ॥ ओंह्रींह्रींह्रींह्रींहुंहुंत्रां
छ्रींछुंफट्स्वाहा ॥ ७ ॥ ओंनृसिंहसर्वश
क्तिसेवितसर्वरोगान्वन्ध२सर्वग्रहान्वन्ध२
सर्वदेवदोषान्बन्ध २ सर्वचोरान्वन्ध १

सर्वपन्नगान्बन्ध २ सर्वव्याघ्रान्बन्ध २
सर्ववृश्चिकान्बन्ध २ सर्वभूतप्रेतापिशा
चशाकिनीडाकिनीमन्त्रयन्त्रतन्त्रपरकृत्या
बन्ध २ कीलय २ मर्दय २ मथ २ चू
र्णय २ चक्रेणगदयावज्रेणभस्मसात्कुरुकु
रु ॥ ८ ॥ ओंज्रोंज्रोंह्रींह्रींह्रींह्रींक्ष्रांक्ष्रों
नृसिंहायनमः ॥ ९ ॥ इतिश्रीनृसिंहपुरा
णेब्रह्मसावित्रीसंवादे लक्ष्मी नृसिंह मंत्र
कवचं सम्पूर्णम् ॥ ॥ ॥



# अथ नृसिंह कवच प्रारम्भः ।

ॐस्वस्ति श्रीगणेशायनमः ॥ अथनृ
सिंहकवचम् ॥ नारदउवाच ॥ इन्द्रादिदे
ववृन्देश ईड्यैश्वर्य्यजगत्पते ॥ महावि
ष्णोर्नृसिंहस्य कवचम्ब्रूहिमेप्रभो ॥ १ ॥
यस्यप्रपठनाद्विद्वां स्त्रैलोक्यविजयीभवेत्॥
ब्रह्मोवाच ॥ शृणुनारदवक्ष्यामि पुत्रश्रे
ष्ठतपोधन ॥ २ ॥ कवचंनरसिंहस्यत्रैलो
क्यविजयप्रदम् ॥ स्रष्टाहञ्जगतांवत्सधा
रणाद्यस्यपाठतः ॥ ३ ॥ लक्ष्मीर्जगत्त्रयं
पाति संहर्त्ताचमहेश्वरः ॥ पठनाद्धारणादे
वा जाताश्चैवदिगीश्वराः ॥ ४ ॥ ब्रह्मम

न्त्रमयंवक्ष्ये भूतादिविनिवारकम् ॥ यस्य
प्रसादाद्दुर्वासा विजयीभुवनेऽभवत् ॥
॥ ५ ॥ पठनाद्धारणाद्यस्य शास्ताचक्रोध
भैरवः ॥ त्रैलोक्यविजयस्यास्यकवचस्य
प्रजापतिः ॥ ६ ॥ ऋषिश्छन्दस्तुगायत्री
नृसिंहोदेवताविभुः ॥ क्ष्रौंबीजंमेशिरःपातु
चन्द्रवर्णोमहामनुः ॥ ७ ॥ ॐ उग्रंवीरंम
हाविष्णुञ्ज्वलन्तं सर्वतोमुखम् ॥ नृसिंह
म्भीषणम्भद्रंमृत्युमृत्युंनमाम्यहम् ॥ ८ ॥
द्वात्रिंशदक्षरोमन्त्रो मन्त्रराजस्सुरद्रुमः ॥
कण्ठम्पातु ध्रुवङ्क्ष्रौंहृद्भगवतेचक्षुषीमम ॥
॥ ९ ॥ नरसिंहायचज्वालामालिनेपातुक
र्णकम् ॥ दीप्तदंष्ट्रायच तथाह्यग्निनेत्राय
नासिकाम् ॥ १० ॥ सर्वरक्षोघ्नायस

वंभूतहितायच ॥ सर्वज्वरविनाशायदहद
हपदद्वयम् ॥ ११ ॥ रक्षरक्षवर्म्ममन्त्र
स्वाहापातुमुखंमम ॥ तारादिरामचन्द्राय
नमोमेहृदयेवतु ॥ १२ ॥ क्लींपायात्पार्श्वं
युग्मञ्च तारोनमःपदन्ततः ॥ नाभिंनारा
यणायेति आंह्रींक्रोंक्ष्रौंचैवहुँफट् ॥ १३ ॥
षडक्षरः कटिम्पात्वों नमोभगवतेपदम् ॥
वासुदेवायपृष्ठङ्क्लीं कृष्णायक्लीसूरुद्वयम्
॥ १४ ॥ क्लीङ्कृष्णायस दापातुजानु
नीचमनूत्तमः ॥ क्लींग्लौंक्लींश्यामला
ङ्गायनमः पायात्पदद्वयम् ॥ १५ ॥ क्ष्रौं
नृसिंहायचक्ष्रौंचसर्वाङ्गेमेसदावतु ॥ इ
तिलेकथितंवत्स सर्वमन्त्रौघविग्रहम् ॥
॥ १६ ॥ तवस्नेहान्मयाख्यात म्प्रवक्त

र्व्यंनकस्यचित् ॥ गुरुपूजांविधायादौ ग्रहणीयात्कवचन्ततः ॥ १७ ॥ सर्वपुण्ययुतोभूत्वा सर्वसिद्धियुतोभवेत् ॥ शतमष्टोत्तरञ्चास्य पुरश्चर्य्याविधिस्स्मृतः॥१८॥ हवनादीन्दशांशेन कृत्वातत्साधकोत्तमः ॥ ततस्तुसिद्धकवचो रूपेणमदनोपमः ॥ स्पर्द्धामुद्धूयभवने लक्ष्मीर्वाणीवसेन्मुखे ॥ पुष्पाञ्जल्यष्टकन्दत्वा मूलेनैवपठेत्सकृत ॥ २० ॥ अपिवर्षसहस्राणां म्पूजानां म्फलमाप्नुयात् ॥ भूर्जेविलिख्यगुटिकां स्वर्णस्थान्धारयेद्यदि ॥ २१ ॥ कण्ठेवा दक्षिणेबाहौ नरसिंहोभवेत्स्वयम् ॥ योपि द्वामभुजेचैव पुरुषोदक्षिणेभुजे ॥ २२ ॥ विभृयात्कवचम्पुण्यं सर्वसिद्धियुतोभवेत्

॥ काकवन्ध्याचयानारी मृतवत्साचयाभ
वेत् ॥ २३ ॥ जन्मवन्ध्यानष्टपुत्रा वहु
पुत्रवतीभवेत् ॥ कवचस्यप्रसादेन जीव
न्मुक्तोभवेन्नरः ॥ २४ ॥ त्रैलोक्यङ्क्षोभ
यत्येवत्रैलोक्यविजयीभवेत् ॥ भूतप्रेतपि
शाचाश्चराक्षसादानवाश्चये ॥ २५ ॥ त
न्दृष्ट्वाप्रपलायन्तेदेशाद्देशान्तरम्भुवम् ॥
यस्मिन्गृहेचकवचं ग्रामेवायदितिष्ठति ॥
॥ २६ ॥ तद्देशन्तुपरित्यज्यप्रयान्त्येवा
तिदूरतः ॥ इतिश्रीब्रह्मसंहितायांत्रैलो
क्यमोहनंनामनृसिंहकवचंसमाप्तम् ॥ ॥

# अथ हनुमत कवच प्रारम्भः ।

श्रीगणेशाय नमः ॥ ॐअस्यश्रीपंचमु
खहनुमन्मंत्रस्य श्रीरामचंद्रऋषिः अनु
ष्टुपछंदः हनुमानपंचमुखदेवता ॐहनु
मान् इतिबीजं ॐवायुपुत्रोतिशक्तिः ओं
अंजनीसुतायेतिकीलकं श्रीरामचंद्रहनुम
त् प्रमादसिध्यर्थेजपेविनियोगः॥ अथन्या
सः ॥ ओं अंजनीसुतायअंगुष्ठाभ्यांनमः ओं
रुद्रमूर्त्तयेतर्जनीभ्यांनमः ओंवायुपुत्रायमध्य
मा० ओं अग्निगर्भायअना० ओंरामदूताय
कनिष्ठिकाभ्यां० ओंपंचमुखहनुमतेकरतल
करपृष्ठाभ्यांनमः अथहृदयादि ओं अंजनी

सुतायहृदयाय नमःओंरुद्रमूर्तयेशिरसेस्वा
हा ओं वायुपुत्रायशिखायैवषट् ओंअग्निग
र्भायकवचायहुं ओं रामदूतायनेत्रत्रयाय
वौषट् ओं पंचमुखहनुमतेअस्त्रायफट् तिइ
हृदयादिअंगन्यासः॥ अथध्यानम्॥श्रीराम
चंद्रदूतायअंजनीसुताय वायुपुत्रायमहाब
लाय सीतादुःखनिवारणाय लंकादहनकार
णायमहाबलप्रचंडाय फाल्गुनसखाय को
लाहलसकलब्रह्मांडविश्वरूपाय सप्तस
मुद्रनिरालंघितायपिंगल नयनायअमि
तविक्रमाय सूर्यबिंबफलसेवाय दुष्टनिवा
रणाय अंगदलक्ष्मणमहाकपिसैन्यप्राणप्र
दायदशकंधर विध्वंसनाय रामेष्टायमहा
फाल्गुनसखाय सीतासहितश्रीरामवरप्र

दायपरप्रयोगायगमनीय हरिमर्कटमर्कटा
य ओं वंवंवंवंवंफट्स्वाहा ओंहरिमर्कटमर्क
टाय फंफं ५ फट् स्वाहा ओं हरिमर्कटम
र्कटाय ठंठंठंठंठंस्तंभनायस्वाहा ओंहरिम
र्कटमर्कटाय लंलंलंलंलं आकर्षणसुखसंप
त्तिकरायस्वाहा ओं ऊर्ध्वमुखहयग्रीवाय
रुंरुंरुंरुं रुद्रमूर्त्तयेसकलप्रयोजन निर्वाह
कारणाय ओंपंचमुखवीरहनुमते स्वाहा
ओं उच्चाटनाय ढंढंढंढंढं कूर्ममूर्त्तयेपंचमु
खवीर हनुमतेपरयंत्रपरतंत्रउच्चाटनाय
स्वाहा ओं कंखंगंघंङं चंछंजं झंञं टंठंडं
ढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवंशंषंसंहं
क्षंत्रंज्ञं स्वाहा इतिदिग्बंधनं ओं पूर्वकपि
मुखपंचमुखहनुमान् टंटंटंटंटं सकलशत्रु

संहारणायस्वाहा ॥ ॐ दक्षिणमुखपंचमु
खहनुमतेकरालनृसिंहायस्वाहा ॥ ॐ ह्रां
ह्रांह्रांह्रांह्रां सकलभूतप्रेतदमनायस्वा
हा॥ पश्चिममुखवीरगरुडायपंचमुखहनुम
तेमंमंमंमंमंसकलविषहरायस्वाहा ॥ ॐ
उत्तरमुखायादिवराहाय लंलंलंलंलंनृसिंहा
यनीलकंठमुर्तयेपंचमुखहनुमते अंजनीसु
तायवायुपुत्रायमहाबलायसीताशोकनिवा
रणायश्रीरामचंद्रार्चिताय महावीर्यप्रम
थनायब्रह्मांडनायकायपंचमुखवीरहनुमते
नमः भूतप्रेतपिशाचब्रह्मराक्षसशाकिनी
डाकिनीअंतरीक्षग्रहपरयंत्रपरतंत्र ॐउच्चा
टनायस्वाहा ॥ सकलजनानिर्वाहकार
णायपंचमुखवीरहनुमतेवरप्रदाय जंजंजं

जंजंस्वाहा ॥ इदंकवचंपठित्वातुमहाकव
चंपठेन्नरः ॥ एकवारंपठेत्स्तोत्रंसर्वशत्रुनि
वारणम् ॥द्विवारंतुपठेन्नित्यंपुत्रपौत्रप्रवर्धन
म्त्रिवारंतुपठेन्नित्यंसर्वसंपत्करंशुभम् ॥च
तुर्वारंपठेन्नित्यंसर्वरोगनिवारणम् ॥ पंचवा
रंपठेन्नित्यंपंचमुखवशीकरम् ॥ षष्ठवारंपठे
न्नित्यंसर्वदेववशीकरम् ॥ सप्तवारंपठेन्नि
त्यंसर्वसौभाग्यदायकम् ॥ अष्टवारंपठेन्नि
त्यमिष्टकामार्थसिद्धिदम् ॥नववारंपठेन्नित्यं
राजभोगसमंलभेत् ॥ दशवारंपठेन्नित्यं
त्रैलोक्यज्ञानदर्शनम् ॥ एकादशवारंपठेन्नि
त्यंसर्वसिद्धिर्भवेन्नरः ॥ कवचस्मरणेनैव
महाबलसमन्वितः ॥ इतिश्री सुदर्शन
संहितायांश्रीरामचंद्रदूतमनोहर पंचमुख

हनुमत्कवचंसंपूर्णम् ॥ ॥ * ॥

# अथ आदित्यहृदय प्रारम्भः ।

श्रीगणेशाय नमः ॥ श्रीरामउवाच ॥
ततोयुद्धपरिश्रांतं समरेचिंतयास्थितम् ॥
रावणंचाग्रतोदृष्ट्वायुद्धायसमुपस्थितम् ॥
॥ १ ॥ दैवतैश्चसमागम्य द्रष्टुमभ्याग
तोरणम् ॥ उपगम्याब्रवीद्राम मगस्त्योभ
गवांस्तदा ॥ २ ॥ अगस्त्यउवाच ॥ रा
मराममहाबाहो शृणुगुह्यंसनातनं ॥ येन
सर्वानरीन्वत्स समरेविजयिष्यसि ॥ ३ ॥

आदित्यहृदयंपुण्यं सर्वशत्रुविनाशनं ॥
जयावहंजपन्नित्यं अक्षयंपरमंशिवं ॥४॥
सर्वमंगलमांगल्यं सर्वपापप्रनाशनं ॥ चिं
ताशोकप्रशमनं आयुर्वर्द्धनमुत्तमम् ॥५॥
रश्मिमंतंसमुद्यंतं देवासुरनमस्कृतं ॥ पू
जयस्वविवस्वंतं भास्करंभुवनेश्वरं ॥६॥
सर्वदेवात्मकोह्येप स्तेजस्वीरश्मिभावनः
॥ एषदेवासुरगणान् लोकान्पातिगभस्ति
भिः ॥ ७ ॥ एषब्रह्माचविष्णुश्च शिव
स्कंदः प्रजापतिः ॥ महेंद्रोधनदः कालो
यमः सोमोह्यपांपतिः ॥ ८ ॥ ३ ॥ पित
रोवसवसाध्यश्चनस्विनो मरुतोमनुः । वायु
र्वन्हीप्रजा प्राणऋतूकर्त्ता प्रभाकरः ॥
९ ॥ ३ ॥ आदित्यः सविता सूर्यः खगः

पूषागभस्तिमान् । सुवर्णसदृशोभानु र्हिर
ण्यरेतादिवाकरः ॥ १० ॥ ३ ॥ हरिदश्वः
सहस्राचिंःसप्तसप्तिर्मरीचिमान् ॥ वितिमि
रोमन्मथःशंभुस्त्वःष्टामार्तंड कौंशुमान् ॥
॥ ११ ॥ ३ ॥ हिरण्यगर्भःशिशिरस्तपनो
भास्करोरविः ॥ अग्निगर्भोदितेःपुत्रः शं
खःशिशिरनाशनः ॥ १२ ॥ ३ ॥ व्योम
नाथस्तमोभेदा ऋग्यजुः सामपारगः । ॥
घनवृष्टिरपांमित्राविंध्यवीथिप्लवंगमः ॥
॥१३॥३॥ आतपीमंडलीमृत्युःपिंगलःसर्व
तापनः॥कविर्विश्वोमहातेजारथःसर्वभवो
द्भवः॥१४॥३॥ नक्षत्रग्रहताराणामधिपोर्वि
श्वभावनः॥ तेजसामापतिजस्वीद्वादशात्म
न्नमोस्तुते ॥ १५ ॥३॥ नमःपूर्वायगिरये

पश्चिमायनमोनमः ॥ ज्योतिर्गणानांपत
येनलिनीपतयेनमः ॥ १६ ॥ ६ ॥ जया
यजयभद्रायहर्यश्वायनमोनमः ॥ नमोन
मःसहस्रांशोआदित्यायनमोनमः॥ १७ ॥
॥ ३ ॥ नमःउग्रायवीरायसारंगायनमोन
मः ॥ नमपद्मप्रबोधायप्रचंडायनमोस्तुते
॥ १८ ॥ ३ ॥ ब्रह्मेशान्मच्युतेशायसूर्याया
दित्यवर्चसे ॥ भास्वतेसर्वभक्षायरौद्रायव
पुषेनमः ॥ १९ ॥ ३ ॥ तमोघ्नायहिमघ्नाय
शत्रुघ्नायामितात्मने ॥ कृतघ्नायचदेवाय
ज्योतिषांपतयेनमः॥ २० ॥ ३॥ तप्तचामी
कराभायहरयेविश्वकर्मणे ॥ नमस्तमोभि
निघ्नायऋषयेलोकसाक्षिणे ॥ २१ ॥ ३ ॥
नाशयत्येषवैभूतंतदेवसृजतिप्रभु ॥ पाय

स्येषतपस्येषवर्षस्येषगभस्तिभिः॥२२॥३॥
एषसुप्तेषुजागर्तिभूतेषुपरिनिष्ठितः एषचै
चाग्निहोत्रंचफलंचैवाग्निहोत्रिणां॥२३॥३॥
देवाश्चक्रतवश्चैवक्रतूनांफलमेवच ॥ या
निभूतानिलोकेषुसर्वएवरविःप्रभुः २४ ॥
॥ ३ ॥एनमापत्सुकृच्छ्रेषुकांतारेषुभयेषुच ॥
।कीर्तयन्पुरुषः कश्चिन्नावसीदतिराघव ॥
॥ २५ ॥३॥पूजयस्वैनमेकाग्रोदेवदेवजग
त्पतिं ॥एतत्त्रिगुणितंजप्त्वायुद्धेषु विज
यिष्यसि ॥ २६ ॥ ३ ॥ अस्मिन्रणेमहा
बाहोरावणंत्वंहनिष्यसि ॥ एवमुक्त्वाततो
गस्त्योजगामसयथागतम् ॥ २७॥ ३॥
एतच्छ्रुत्वामहातेजा नष्टशोकोऽभवत्तदा ॥
धारयामाससुप्रीतोराघवःप्रयतात्मवान् ॥

॥ २८ ॥ ३ ॥ आदित्यंप्रेक्ष्यजप्त्वेदंपरंह
र्षमवाप्तवान् ॥ त्रिराचम्यशुचिर्भूत्वाधनु
रादायवीर्यवान् ॥ २९ ॥ ३ ॥ रावणंप्रे
क्ष्यदुष्टात्मजयार्थंसमुपागमन् ॥ सर्वय
त्नेनमहताव्रतस्तस्यवधेभवत् ॥ ३० ॥ ३
अथरविरवदन्निरीक्ष्यरामंमुदितमनाः पर
मंप्रहृष्यमाणः ॥ निश्चरपतिसंक्षयंवि
दित्वासुरगणमध्यगतोवचःस्मरेति ॥३१॥
॥ ३ ॥ एकचक्रोरथोयस्यदिव्यः कनकभू
षितः ॥ समेभवतुसुप्रीतोपद्महस्तोदिवाक
रः ॥ इति श्रीवाल्मीकरामायणे श्रीराम
अगस्ति संवादे युद्धकांडे आदित्यहृदय
स्तोत्रंसंपूर्णम् ॥



# अथ गणपति दशकम् ।

ॐस्वस्ति श्रीगणपतये नमः ॥ य
द्विनिधाय हृदि स्थिरभावे पर मुपया
तिसुखञ्चखलुमर्त्यः ॥ श्रीगणराजतवाङ्
घ्रियुगन्तत्ससतत महम्प्रणमामि भजामि
॥ १ ॥ सिद्धिमथर्द्धिमुभेपरदेव्यौ चमर
सुशोभितपाणिसरोजे ॥यश्चरितैरनुरञ्ज
यतिस्वे स्तामिभमुखप्रणमामिभवन्तम् ॥
॥ २ ॥ श्रीमदलौकिकवैभवशोभिन्परि
मितिवर्ज्जितविघ्नहृदास्य । सम्पदमेति
नरःकिमुनाऽसौतव पदपङ्कयुगम्भजतेयः
॥ ३ ॥ सम्मुखतामधिगत्यनियत्या तव

सुरवन्दितकुम्भिवरास्य । यस्समुपैतिन
वाञ्छितमर्थं संजननवान्वदकोऽस्तजग
त्याम् ॥ ४ ॥ कोटिरविद्युतिदैन्यविधायि
त्वदतिलसत्तनुसंस्मृतिकर्तुः । मानस
जाग्रदबोधतमोऽन्धंनकिमु विनश्यतिशैल
सुताज ॥ ५ ॥ दीनतमंथदिमामधुनात्व
म्पतितशिरोमणिरेषविहेयः । निर्ज्जरवर्य
नुतेतिजहासिक्वनव गतंनुशरण्यतयात
त् ॥ ६ ॥ श्रीगिरिराजसुताङ्गभुवेते भ
वतुमदीयमिदंनमउच्चैः । अस्तुनजानुत
वाङ्घ्रिवियोगो ममगणनायकभोइतिया
चे ॥ ७ ॥ यद्यपिसन्तिसुरावहवोऽन्ये नि
जजनवाञ्छितदानसमर्थाः । अस्तिसुरेड्य
तथापिविनात्वां निजविपदन्तकरस्स्मृति

तः कः ॥ ८ ॥ त्वामपहायदयैकपयोधिन्त्रि
भुवनसेवितमार्त्तिनिहत्यै । अन्यमिहामर
मर्च्चतियोऽसौ सुमतिषुकिंस्तवनीयविवे
कः ॥ ९ ॥ किम्बहुनाभुवनाधिपवन्द्यं हृ
दिनिदधेचरणाब्जमिदन्ते । युक्तमिभास्य
भवेद्यदथो तत्कुरुमहरऽस्तुनमोविभवेते
॥ १० ॥ स्तोत्रमिदंशिवदंशिवसूनो र्यइ
हपठेदनुरागभरेण । सर्वविपद्रहितस्सक्र
तोन्द्रः परसुखवार्द्धि निमग्नमनास्स्यात् ॥
॥ ११ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव ल
क्ष्मीनारायणाख्यकविवराविरचितं श्रीगण
पतिदशकस्तोत्रं सम्पूर्णम् ।



# अथ ढुण्ढिराज दशकम्

ॐम् ॥ श्रीढुण्ढिराजविहिताकरुणात्व
यैषा रूपान्तरंनहिपुनर्ल्लभताङ्कदाचित्
माहक्षदीनजनसंविहितामबन्ध्या मभ्यथ
नांनचिदधातिभवादृशःकिम् ॥ १ ॥ श्री
ढुण्ढिराजगणनायकलोकवन्द्य त्वंयादृश
स्समवलोकितआर्द्रचेताः । देवेषुवैभवभ
रप्रवरेषुकाश्चि त्किन्तादृशोऽस्तिकथया
शुविचार्यदेवः ॥२॥ श्रीढुण्ढिराजविहिताः
प्रबलामयाके पूर्वेपुजन्मसुसुनिर्म्मलपुण्य
पुञ्जाः । येःप्रेरितऽखलुभवानतदर्हमर्हे
रन्विष्यमामिहसमानयदाशुपुण्याम् ॥३॥

श्रीढुण्ढिराजशरणागतदीनदुःखध्वंसैकद
क्षकरुणारसपूर्णचेतः । मन्मन्तुवारमविग
ण्यतथाकुरुत्व न्त्वत्पादपद्मविरहोनयथाभ
वेन्मे ॥ ४ ॥ श्रीढुण्ढिराजयुवराजमृगा
ङ्कमौले य्यस्मैददासिकृपयावसतिम्पुरे
स्मिन् । कस्तम्पुनर्व्वहिरितोविदधातिक
र्त्तुं स्वीयंमनोनृपसुरेपुतथासमुत्कम् ॥
॥ ५ ॥ श्रीढुण्ढिराजभवतस्सकृदप्यहो
येज्जन्मान्तरार्ज्जितमहासुकृतैकभारैः ॥
सन्दर्शनंनिखिलदुःखतमोर्क्कतेजस्सम्प्रा
प्तमर्कतनयःकिमुवीक्षतेतान् ॥ ६ ॥ श्री
ढुण्ढिराजविमुखोऽस्मियदर्चनात्तेयच्चास्मि
दुष्कृतविधानविधौपटीयान् । एततक्षम
स्वपरिरक्षचदुःखतोमांसांसारिकादसियत

इशरणागतत्रः ॥ ७ ॥ श्रीढुण्ढिराजनवप
ङ्कजिनीशभासान्दुर्द्दर्प्पहारिशिवकारिनि
जार्च्चकानाम् । यश्चारुमोदकभृदेकरदं
सुतुन्दन्ध्यायत्यदस्तव वपुर्न्नसकिङ्कृता
र्थः ॥ ८ ॥ श्रीढुण्ढिराजचरणं शरणन्त
वाऽहन्ध्यायामिनान्यदिह किञ्चिदपिस्मरा
मि । द्वन्द्वार्द्दितस्यभवदेकपरायणस्यप्रोद्ये
स्त्वदेकवशगाममभोक्षसिद्धिः॥ ९ ॥ श्री
ढुण्ढिराजबहुभिः किमथप्रलापैर्म्मूर्द्धामया
चरणयोस्तवसन्न्यधायि । यत्किञ्चिदेवभ
वतोऽथ भवेद्विचारेतत्त्वंविधेहिममचाऽस्तु
नमोनमस्ते ॥ १० ॥ श्रीढुण्ढिराजदशकं
यइदम्पवित्रम्प्रातः पठेदनुदिनंशृणुयान्सु
दावा । भोगान्मनोऽभिलषितानुपभुज्यसो

ऽन्तेश्रीढुण्ढिराजकृपयाऽऽशुलभेतमुक्तिम्
॥ ११ ॥ इतिश्रीमत्कौशल्यगोत्रोद्भवल
क्ष्मीनारायणाह्वयकविवराविराचितंश्रीढुण्ढि
राजदशकंस्तोत्रंसम्पूर्णम् ॥



# अथ काशी पञ्चदशी स्तोत्रम् ।

ॐम् ॥ श्रीविश्वेश्वरविश्वरक्षणविधौ
प्रोल्लासश्चन्मानसस्वच्छस्फारयशः प्रपूर
विलसत्कारुण्यपाथोनिधे । श्रीकाशीम्भव
बन्धमोक्षकुशलान्देवस्तुतान्त्वत्तनूमन्यत्रा

पिसकृत्स्मरत्य पिकथंयस्तस्यमुक्तिर्न्नकि
म् ॥ १ ॥ श्रीविश्वेशवसन्सुदूरमऽपिय
स्त्वद्भावसम्भावितःश्रीकाशीम्प्रतिसंस्मर
त्यविरतंसस्यंनुबन्धोऽस्तिसः।यस्तांवाञ्छ
तिभाग्यभारभरितोधीमा न्मुनीन्द्रोऽस्य
सौयोगच्छत्यमरस्सयः प्रविशातिचंसोऽत्र
नद्वापरः ॥ २ ॥ श्रीविश्वम्भर विश्वनाथ
गिरिजाप्राणेशदेवस्तुतस्त्वाम्प्रच्छामिनतिं
विधायसुतराम्बध्वाञ्जलिंसादरम् । स्व
र्गिस्वान्तसमुत्सुकीकररुचिं श्रीकाशिका
न्त्वत्पुरंपुण्यैः प्राप्यविहातुमिच्छतिपुन
र्यस्सोऽस्तिकिम्बुद्धिमान् ॥ ४ ॥ श्रीश
म्भोभवतस्स्थलम्परमिदं श्रीकाशिकेति
स्फुट म्पापंह्नकर्मविहायधर्म्मनिरत स्सं

सेवतेयःकृती ॥ गन्धर्वैरमरैन्नरैर्म्मुनिवरै
स्सन्न्यासिभिस्तापसै रिष्टाङ्कष्टहृरांस
यातिपरमां मुक्तिन्त्वदेवाञ्जसा ॥ ४ ॥
श्रीभूभृत्तनयेशशेषविलस द्यज्ञोपवीतप्र
भो कैवल्यप्रदसङ्गमेचनिगमै रीड्येतथा
चागमैः ॥ वाराणस्यभिधेकरोतिदुरित
ध्वंक्षेत्रेत्वदीयेऽत्रयः क्रूरारुद्र पिशाचता
स्थिरतरा तस्यैवभोग्याध्रुवम् ॥ ५ ॥
श्री गौरीशगिरीशचारुकरुणासान्द्रान्त
रात्मन्विभो स्थानन्तेदुरितौघनाशकमि
द म्पुण्यप्रदालोकनम् ॥ दृष्ट्वायेसकृद
प्यहोकथमपि प्राणांस्त्यजन्त्यन्यतः कि
न्तेनाऽनुभवन्तिदेवललना लावण्यली
लारसम् ॥ ६ ॥ श्रीशूलिन्निजभक्तशूल

विगम श्रीदण्डनामस्मृते सत्तीर्थान्यखि
लानिपञ्चदशाभि र्न्नित्यङ्कलाभिस्स्त्र
यम् ॥ श्रीकाश्यांनिवसन्तियत्रभवतः पा
दाम्बुजाच्चांकृते तान्त्यक्त्वाखलुतीर्थम
न्यदिहक स्तत्त्वविद्धावति ॥ ७ ॥ श्री
गङ्गाधरभूधरेन्द्रतनया चेतोऽलिफुल्ला
म्बुज श्रीमत्तीर्थमिदम्प्रविश्यभवतः, कृ
त्वाभवद्दर्शनम् ,, नानाजन्मभिरर्ज्जितै
रतितरा मुग्रद्विपाकोद्धुरैः पापैःकिन्नुमह
द्भिरेषमनुज स्सम्पीड्यतेजातुचित् '.
॥ ८॥ श्रीयोगीन्द्र करीन्द्र चर्मविलसत्
संव्यानगौरीपते वाराणस्य भिधानधा
रिणितवक्षेत्रेपवित्रेऽन्वये ॥ निर्वित्ताअ
भिजाततावरहिता निर्बुद्धयोपिस्थिति

ङ्कुर्वन्तिप्रभुरप्यहोनुजगता न्तत्साम्य
माप्नोतिकिम् ॥ ९ ॥ श्रीपञ्चाननधूर्ज्ज
टेतवपुरे त्रैलोक्यसारेपरे पापव्रातविना
शनैकचतुरे श्रेयस्स्फुरन्मन्दिरे ॥ रुद्रा
क्षाभरणः प्रदोषसमये भस्मत्रिपुण्ड्रा
ङ्कितो यस्त्वाम्पश्यतिलिङ्गरूपिणम
हो-सोऽन्योभवत्तोऽस्तिकिम् ॥ १० ॥
श्रीबालेन्दुविभूषितालिकतट प्रोद्भासि
केशच्छट क्षेत्रन्तेऽधिवसन्निदन्त्वयिम
नो धत्तेऽनिशंयोनरः ॥ तन्मातापिनरौ
कृतार्थेजनुषौ पूतन्तदीयङ्कुल न्तस्या
लोकनमात्रतश्चमनुजाः श्रीणाम्भव
न्त्यास्पदम् ॥ ११ ॥ श्रीखट्वाङ्गधर
स्फुरत्सितकर प्रोद्यत्कलाशेखर क्षेत्रन्ता

वकमेतदेवविमल न्धन्यंयशस्यंमहत् ॥
मोहाल्लोभतएववेन्द्रियमुदे हित्वाऽयते
ऽन्यत्रयो निर्बुद्धिविषयैकलुब्धमनस न्दे
वाहसन्त्येवतम् ॥ १२ ॥ श्रीमीनध्वजद
ग्धदेहभसितप्रोद्धूलिताङ्गप्रभो क्षे
त्रेतेऽत्रपवित्रचित्रचरिते रागादुषित्वाऽ
निशम् ॥ रुद्राक्षोज्ज्वलभूतिभासितनव
स्त्वन्मानसायेजना स्त्वामच्चन्त्यपिवि
ल्वपत्रकुसुमै स्तेकिन्नवन्द्याःसुरैः ॥ १३ ॥
श्रीभूतेशभुजङ्गभूषणविभो भूवारिमु
ख्याकृते पञ्चक्रोशमितंनरामरनुत क्षे
वल्यकामाश्रितम् ॥ यःकश्चिद्भवतः प्र
भोःकथमपि क्षेत्रम्परिक्राम्यति क्षेत्रंसं
सृतिनायकंसचाकिमु भीमानतिक्राम्यति

॥ १४ ॥ श्रीदोषाकरशेखरस्मरहर स्थैर्य्यैकरत्नाकर क्षेत्रेऽस्मिन्भवतोद्रुरूहृच रिते देवापगालङ्कृते ॥ अस्माकंवस ताङ्कलङ्कितधिया न्दोषाकराणाम्भृ शं सिद्धिसाधुविधातुमाशुकुशलः श्रीमान्महेशोभवान् ॥ १५ ॥ काशीस्तोत्र मिदम्परैकसुखद ङ्काश्येकरागास्पद ङ्काशीतोवहिरप्यहोननुवस न्नित्यम्प ठत्येवयः ॥ काशीनाथकृपारसैकवसति र्भूत्वाऽऽश्रयश्चाश्रियः काशीवासफलंशि वादविकलं सत्यंलभेतैवसः ॥ १६ ॥ इतिश्री मत्कौशल्यगोत्रो द्भवलक्ष्मीना रायणाङ्कयकविवरविरचितं श्रीकाशीपञ्च दशी स्तोत्रंसम्पूर्णम् ॥

## ॥ काशीदशकम् ॥

ॐ ॥ श्रीकाशीम्प्राप्यविद्वानूकस्तीर्थमन्यत्सामिच्छति ॥ साम्राज्यम्पदमादायकः काङ्क्षतिवराटिकाम् ॥ १ ॥ देवाभिवाञ्छिताङ्काशीं लब्ध्वात्यजतियः कुधीः ॥ देवाःकृत्वाशिरःकम्पन्तं निन्दन्तिमुहुर्म्मुहुः ॥ २ ॥ लीनःपापेपुहीनोऽपि जात्याविंत्तैर्गुणैरपि ॥ काशीवासी वरंमर्त्यो नान्यत्रेन्द्रसमोऽपिना ॥ ३ ॥ भोगमोक्षप्रदाङ्काशीं विहायान्यत्रयातियः ॥ कामधेनुन्तिरस्कृत्य सेवतेहासगर्द्दभीम् ॥ ४ ॥ सएवमेपरोवन्धु स्स

एवपरमस्सखा ॥ सगुरुस्सप्रभुर्मेयः का
शिवासोपदेशकृत् ॥ ५ ॥ भवप्रियाम्भ
यच्छेत्रीं श्रीकाशींयस्सुमन्दधीः ॥ अ
न्यग्रामसमांवेत्ति नतंद्वासीसउच्यते ॥
॥ ६ ॥ यत्प्रवेशाज्जनःकोऽपि लभते
श्रीमहेशताम् ॥ ताङ्काशीङ्कः कृतील
ब्ध्वा ह्यातुमुत्सहतेपुनः ॥ ७ ॥ भिक्षा
न्नमप्यदन्भूभौ स्वपन्नपिदिगम्बरः ॥
दिविषद्दुर्लभाङ्काशीं नत्यजेज्जातु
कोविदः ॥ ८ ॥ सजनोमेपरंशत्रु स्सए
वब्रह्महानरः ॥ सएवसर्वदोषाढ्यो यो
माङ्काश्याःप्रवासयेत् ॥ ९ ॥ ऋणत्र
याद्विनिर्मुक्तो विनिर्मुक्तोत्रिपत्तितः ॥ वि
निर्म्मुक्तस्ससंसारा द्यःश्रीकाशीनिवासकृ

त ॥ १० ॥ दशकमिदंश्रीकाश्याः पठतिचभक्त्या शृणोतियस्सततम् ॥ शैवम्पदमतिदुर्लभमेति जनस्सोऽञ्जसास द्यः ॥ इतिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मी नारायणाह्वयकविवरविरचितं श्रीकाशी दशकस्तोत्रं सम्पूर्णम् ॥

## ॥ मङ्गलदशकम् ॥

ॐ ॥ शुण्डादण्डविधूननेनकुरुते यो दिग्गजान्दिग्गतान् यस्याङ्घ्रिद्वयसेवनेननितरां यान्त्यन्तरायाःक्षयम् ॥ देवा देवपृदाकुकिन्नरनरैर्यःप्रार्थितः प्रत्यहं श्रीढुण्ढिर्गणनायकस्सहगणैः कुर्याद्वरं

मङ्गलम् ॥ १ ॥ योऽधीशोद्युसदाम्भ जन्तिविबुधा यंयेनविश्वन्ततं यस्मैस्व च्छमतिस्तपःप्रकुरुते यस्माज्जनोयाति शम् ॥ कारुण्यम्भवहारियस्यसकलं य स्मिन्प्रयातिस्थितिं श्रीविश्वेश्वरईश्वर स्सजगतां कुर्याद्वरंमङ्गलम् ॥ २ ॥ प्रा लेयाद्रिकुलंययास्वजनुषा पूतेनसम्पा व तं सर्वस्यक्षुदभिक्षयायसततं न्दीक्षाग्र हीतायया ॥ ब्रह्मोपेन्द्रमहेन्द्ररुद्रवरुणै र्यासेवितासिद्धये सादेवीगिरिजागिरी शमहिषी कुर्याद्वरंमङ्गलम् ॥ ३ ॥ नि श्शेषामरमानसार्चितलतिका सन्तानसंव र्द्धक श्रीमत्तारकदेवतारिमुदिर ध्वंसोग्रवा त्याचयः ॥ चञ्चत्संशितशक्तिपुस्तकध

रः केकीन्द्रसद्वाहन स्सेनानीर्गिरिजाम
नोऽम्बुजरविः कुर्य्याद्वरंमङ्गलम् ॥
॥ ४ ॥ स्त्रस्मिन्नम्भसिमज्जतोभवभ
या ज्जन्तोस्समुद्धारिणी पापानाम्परि
हारिणीस्मरणत स्स्त्रोतस्त्रयीधारिणी ॥
श्रीशैलेशसुते, शवद्धविलस त्क्लेशाटवी
चारिणी श्रीगङ्गा शिव कारिणीसुभ
जता ङ्कुर्य्याद्वरं मङ्गलम् ॥ ५ ॥
प्रत्यग्राम्बुदकान्तकान्तिरुचिरो मालीक
पालीवली चञ्चत्केशभरच्छटाप्रतिहत
ब्रह्माण्डखण्डावधिः॥दिग्वासाभुजगेन्द्रभू
षणवृतो नृत्यप्रमोदान्वितः श्रीमान्भैरव
ईडितस्सुरवरैः कुर्य्याद्वरंमङ्गलम्॥ ६ ॥
नीलेन्द्रोपलदीधितिर्न्नलिनद क्कन्दर्प्प

दर्प्पापह स्तत्पीताम्बरभृत्वरार्ध्यमणिभृ
त्सौवर्णभूषावृतः ॥ शङ्खाम्भोजगदासु
दर्शनधरः श्रीमानदिवौकोवर स्तेजोधा
मसमाधवामधुरिपुः कुर्य्याद्वरंमङ्गलम्
॥ ७ ॥ प्रौढप्रोल्लसदज्ञताप्रथमनी प्रो
द्यत्प्रभाभास्वरा चैत्यद्वेपणदीर्घदन्यदल
ने दीक्षावतान्दीक्षिका स्वीयस्वान्तमहा
धिसादनसमुत्स्ववासिसंसेविता दुर्ग्गा
दुर्ग्गविनाशिनीदुरितहृ त्कुर्य्याद्वरंमङ्ग
लम् ॥ ८ ॥ यद्वासीद्वजिनव्रजैरधिगतो
हीनोऽपिजात्योच्चकै र्न्निर्वित्तोऽप्यनवन
वद्यकर्म्मविमुखो मुग्धोऽपिहिंस्रोऽत्तमः ॥
मर्त्त्योयातिसुखेनयोगिभिरहो दुष्प्रापमै
शम्पदं साकाशीगिरिजापतेः प्रियतमा

कुर्य्याद्वरंमङ्गलम् ॥ ९ ॥ कस्सेव्योगु
णिनाचदातृमहिमा केनेहसन्तन्यते के
नाज्ञाघटजस्यचारुचरिता पत्तिर्न्नकल
ङ्घते ॥ राज्ञांमूर्द्धनिरत्नवाररुचिरं हैम
ञ्चकिंराजते सत्प्रश्नोत्तरमध्यवर्णभणि
ता कुर्य्याद्वरंमङ्गलम् ॥ १० ॥ मङ्गल
दशकमिदंयः पठतिचभक्त्याशृणोतिय
श्चापि ॥ मङ्गलमिहखलुलभते जातु
नलभतेनातुनलभतेतन्यत्सः ॥ ११ ॥
इतिश्रीमत्कौशल्पगोत्रोद्भवलक्ष्मी नाराय
णाव्हयकविवरविरचितं मङ्गल दशक
स्तोत्रं सम्पूर्णम् ॥ सश्रीकः कांचेना
विन्ध्येन अश्वस्थम् किरीटम् ॥

## ॥ प्रातः स्मरणा ष्टकम् ॥

ओम् ॥ प्रातस्स्मरामिकरुणानिधिमीश
वेधः क्षीराब्धिजेशसुरराजनताङ्घ्रिपद्म
म् ॥ नस्यैववाञ्छितफलप्रदमार्त्तबन्धुं
मोहान्धकारतरणिङ्करिपुङ्गवास्यम् ॥
॥ १ ॥ प्रातस्स्मरामितिमिरप्रचुरप्रसा
र प्रोद्धारकारिकिरणप्रकरप्रचण्डम् ॥
प्रोदण्डदुष्कृतभरच्छिदुरंसुरेडय न्त्रैलो
क्यपावनमनन्तविभूतिमर्कम् ॥ २ ॥
प्रातस्स्मरामिकुटिलामलकुन्तलाढ्य स्फु
ल्लारविन्दवदनंनवनीरदाभम् ॥ वैकुण्ठ
वासिनमजादिसमर्च्चिताङ्घ्रिं श्रीदांश्र
यःपतिमनन्तमजंमुरारिम् ॥ ३ ॥ प्रात

स्स्मरामिविपदुद्धरणञ्जनाना म्ब्रह्मादि वन्द्यचरणङ्करणंसुखानाम् ॥ श्रीशैल राजतनयाञ्चितवामभाग म्भाग्यंविदा म्भवभिदम्भगवन्तमीशम् ॥ ४ ॥ प्रात स्स्मरामिभवभीतिविनाशदक्ष न्दैत्यान्व यक्षयकरञ्जउतविपक्षम् ॥ ब्रह्माद्यचि न्त्यमहिमत्रिजगत्प्रगेय म्ब्रह्माण्डकोटि जनकम्भवभागधेयम् ॥ ५ ॥ प्रातस्स्म राम्यखिललोकविधानशक्त म्भक्तानु कम्पिनमुदारसमञ्जमाद्यम् ॥ कारुण्यरा शिममरेडितमम्बुजस्थ म्प्राज्यप्रकृष्टवि भवंवरदंविरिञ्चिम् ॥ ६ ॥ प्रातस्स्म रामिदुरिताटविकोयदाव न्दावानलञ्ज्व विमुदारतरप्रभावम् ॥ रुद्रावतारमतिरो

द्र तमीचरारिं श्रीमन्त मक्ष हरम
ञ्ज निका कुमारम् ॥ ७ ॥ प्रा
तस्स्मरामिगगनस्पृशमुग्रकाय म्प्रख्य
ग्रवारिदरुचिंरुचिरोरुगायम् ॥ घोराट्टहा
सपरिपूरितदिग्दलान्तं सन्तंसुरेषुविदि
तम्भुविभैरवन्तम् ॥ ८ ॥ प्रातःपठत्य
मलबुद्धिरुदारचेता भक्त्यावसन्ततिल
काष्टकमुत्तमंयः ॥ निर्धूयकल्मषभरंसु
कृतीससद्यो लब्ध्वेहकीर्तिमचलांमहदे
तिसौख्यम् ॥ ९ ॥ इतिश्री मत्कौशल्य
गोत्रोद्भव लक्ष्मीनारायणाह्वयकविवर
विरचित म्प्रातस्स्मरणाष्टक स्तोत्रंस
म्पूर्णम् ॥

## ॥ शरभाष्टकम् ॥

ॐ ॥ श्रीमत्खत्तीक्ष्णचञ्चूपटुपुटघ
टितस्वीय भक्तारिवर्गस्फारोदारोदरा
न्तरस्रवदमितल सद्रक्तपानप्रमत्ताः ॥
वेगोत्कालप्रचण्डप्रपदपदहृति प्रोच्चल
द्भूमिभागाः क्रूराश्शूरागणास्तेऽनिशम
तिमुदिताः पान्तुमांशालुवेश ॥ १ ॥
प्रोद्यन्मार्त्तण्डचण्डस्फुरदतिविसर द्र
श्मिजालप्रताप प्रौढिध्वंसैकदक्षप्रचल
दरुण दकूपातसन्तापितारे ॥ नैशित्यो
ल्लासिधारक्षुरखरजायिभि निर्भरोग्रैर्न्न
खाग्रै स्तूर्णमहैरिवक्षश्शरभाविदलय न्पा
हिमाम्पक्षिराज ॥ २ ॥ यद्वेगोत्थानिवा

तप्रहतचटचट त्रुट्यदस्युच्चशृङ्ग ग्रा
वान्योऽन्याभिघातप्रसरदतिखर ध्वानस
न्तानयोगात् ॥ जायन्तेभीनभीताः ककु
बधिपतय इशक्रवन्ह्यर्कजाद्याः पक्षाभ्या
माशुताभ्यामभिजहिमदरीन् पाहिमा
मष्टमूर्त्ते ॥ ३ ॥ ज्वालामालातिभीलिप्र
दनिशितशिखा त्र्यग्युदारोग्रभासा रक्षो
वक्षोऽसृगोघ प्रचुरतरसमास्वादनोत्सु
क्यभाजा ॥ मद्विद्वेषैकचेतोरिपुजनहृदय
न्त्वत्त्रिशूलेनभिन्नं याद्वेत्वान्दीनब न्धो
शरभखगपते तेनरक्षांनिजाञ्च ॥ ४ ॥
बद्ध्वापाशेनसम्यग्भुजगविजयिना गा
ढमाकृष्यदूरात्कोपादुत्पात्यादिक्षु प्रसभम
तितराम्भ्रामयित्वाममारीन् ॥ अत्यन्त

न्भीषणायाङ्गिरिदृषादितथा पोथयश्री
पुरारे यान्तुक्षिप्रंयथातेयमनिगडसिता
श्शामनींराजधानीम् ॥ ५ ॥ येमांनिन्द
न्तितेषाङ्खगवररसना न्त्रोटयित्वासमू
ल ङ्कृत्वाऽधोखण्डखण्डम्प्रियपिशित प
त स्तृप्तियोगंविधेहि ॥ कुर्वन्तीच्छन्तिवा
येगिरिशमदहित न्तन्मनोवुद्धितेज स्सं
हृत्येमान्विमूढान्कुरुघमदयने सर्वदाधे
हिचिन्तम् ॥ ६ ॥ नेत्रेनिष्कास्यभित्वा
खरनखरमुखैस्तस्यकर्णौचनासा च्छित्वा
जिह्वाविदार्य्यस्फुरदसिसुतया पाटयि
त्वाऽथवक्षः ॥ कुक्षेरूर्वोस्सजान्वोर्दलनम
पिपदोः खड्गपातेनकृत्वा सद्यःप्रस्थाप
यारिंममयभककुभं शालुवेशावमाश्व ॥

॥ ७ ॥ कुन्तेप्रोतञ्चविद्धंशितशरनिक
रैः पाशबद्धञ्चकीलै र्वक्रेश्रुत्योरुपस्थेक
लितमतनुभी रज्जुभिर्न्नद्धमङ्घ्र्योः ॥भू
योभूयस्सकोपम्परिदलिततनुं मुद्गराग्रैरि
पुंमे पञ्चत्वम्प्रापयत्वङ्कुरुमयिकृपया
शालुवेशप्रसादम् ॥ ८ ॥ भूनेत्रावृत्ति
मात्ररहासिजितमनाः प्रत्यहंयोनिशीथे
शाल्वेशस्तोत्रमेतत्पठतिसदिवसे स्सप्त
भिर्यातिसिद्धिम् ॥ पुण्याङ्कीर्त्तिम्प्रति
ष्ठामपिचगुरुतरां सौख्यसम्पत्तिमग्र्यां
सम्प्राप्यासौकृतार्थःपरपदमयते शालु
वेशप्रसादात् ॥ ९ ॥ इतिश्री मत्कौश
ल्यगोत्रो द्भवलक्ष्मीनारायणाह्वयकविवर
विरचितं श्रीशरभावतारत्रिपुरारिदारुणा

ष्टकस्तोत्रं सम्पूर्णम् ॥

## ॥ श्रीविश्वेश्वराष्टकम् ॥

ॐ ॥ यःकारुण्यनिधिर्विधिर्भजतियं येनैपसंरक्ष्यते यस्मैधीरधियोदिशन्तिनिखिलं यस्मात्सुखम्प्राप्यते ॥ यस्येन्द्रप्रमुखाःश्रयन्त्यपचितिं यस्मिन्पराद्दशक्तयः पायान्नस्सुकृपारसैकजलधिः श्रीमान्सविश्वेश्वरः ॥ १ ॥ यस्त्वेपामनिशन्तनोतिसुतराम्पुरम्परंश्रेयसा मापद्वारमथक्षिपत्यतितराङ् क्षारेमहाम्भोनिधौ ॥ स्वाराजादिकिरीटरत्ननिवहे रुद्भासिपादाम्बुजःपायान्नस्सु० ॥ २ ॥ यंवेदाःप्रव

दन्तिनिर्ग्गुणमजं सच्चित्सुखंव्यापिन ङ्का
यन्तिप्रवरप्रवृद्धधिषणा नव्यैरनेकैस्स्त
वैः ॥ ध्यायन्तिस्थिरमानसायतिवरा धी
राःपरंयोगिनःपायान्नस्सु० ॥ ३ ॥ येने
दन्तनुभिर्न्निजाभिरभितः क्षोण्यादिका
मिस्तत म्भक्तानामभिलाषपूरणाविधौ
चित्तञ्चसन्दानितम् ॥ दुर्द्दर्प्पासुरदर्प्प
दारणकृतेपीनःपिनाकोधृतःपायान्नस्सु०
॥ ४ ॥ यस्मैतत्त्वविदोऽर्प्पयन्तिसकलं
श्रेयश्चितंरागतो वेधोविष्णुशचीपतिप्र
भृतयो नित्यंहरन्तेबलिम् ॥ साधूनाङ्
कुशलंलयश्चकुधियां सत्यन्तपोरोचते
पायान्नस्सु० ॥ ५ ॥ यस्माद्भीतमनाः
पयोज्निजनि विश्वंविधत्तेतरां श्रीका

न्तोऽवतिसादरम्मरुदयं वाव्यग्निरुज्जृ
म्भते ॥ मार्त्तण्डस्तपतिक्षपापतिरसा वा
नन्दयत्यंशुभिः पायान्नस्सु० ॥ ६ ॥ य
स्योदारमपारपातकहरं ञ्चित्रञ्चरित्र
ञ्जनो गायन्भक्तिभरेणसन्ततमथो शृ
ण्वंश्चसाञ्चिन्तयन् ॥ पाकारिप्रमुखाम
रस्तुतमहो प्राप्नोतिशैवम्पदम्पायान्न
स्सु० ॥ ७ ॥ यस्मिन्नुप्तमनारतंसुकृति
भिः कर्म्माखिलंनिर्म्मलं स्थायिस्फारक
लङ्कवर्ज्जितफलं श्रीकीर्त्तिकृज्जायते ॥
ब्रह्माण्डान्यमितान्यसङ्कटमथो राज
न्त्यहोनित्यदा पायान्नस्सु० ॥ ८ ॥ श्री
लक्ष्मीनारायणनिर्म्मितमिदं मष्टकमहे
शस्य ॥ श्रोतॄणाम्पठतामपिविगता पा

थम्परंशिवन्दिशतु ॥ ६ ॥ इतिश्रीम
त्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयक
विवरविरचितं श्रीविश्वेश्वराष्ठकस्तोत्रं
सम्पूर्णम् ॥

## ॥ शिव स्तोत्रम् ॥

ॐ ॥ जयदेवदयानिधेविभोकुरुका
रुण्यमगण्यवैभव ॥ भवभीतिपराभवा
र्थिनोभवभावोऽस्तुसदैवमेत्वयि ॥ १ ॥
अयिनाथतवावलोकनङ्कुरुते यस्सकृद
प्युदारधीः ॥ कमलापतिपद्मजादयः कि
मुवाच्छन्तिनतं विलोकितुम् ॥ २ ॥
भवभूतिविभूषितप्रभो भवभावात्तिंविना

शभेषजम् ॥ भवतिभ्रमहारिणिस्थिरम्भ
ब तुप्रेमसदैवमामकम् ॥ ३ ॥ हरहारक
से वकापदाहरेमंशकरदुर्द्दरांशुचम् ॥ हर
णं विपदांविधेहि मेहरतामर्थवतान्दिधासि
यत ॥ ४ ॥ शिवदायिपदाम्बुजार्च्चनेशि
वलिप्सालसदन्तरात्मनाम् ॥ शिवयाप
रिषेवित्तेऽस्तुमेशिवभक्तिः श्रमहारिणित्व
यि ॥ ५ ॥ अयिशंकरशंकरोऽसिचेन्मयि
नोशंकुरुषेकथम्प्रभो ॥ मयिदोषदृशन्द
धासिचेन्नहिदोषाकरशेखरोऽसिकिम् ॥६॥
करुणावरुणालयोऽपिसन्वरुणा दित्रिद
शाभिवन्दित ॥ करुणामसृणान्नुशम्भु
शंमयिदीनेविदधासिनोकथम् ॥ ७ ॥ श
रणागतवत्सलो ऽसिचेत्कुरुदृष्टिंशरणाग

तेमयि ॥ स्मरजित्पुरभित्किमन्यथागुण
जाङ्कीर्त्तिताँसमेष्यासि ॥ ८ ॥ त्वयि
योविदधातिनोरतिंलभतेकिंसजनः परा
ङ्गतिम् नहियोऽस्तिजनस्सदोषधंसरु
गन्तङ्किमुपश्यतिप्रभो ॥ ९ ॥ अजय
न्मदनंयथा भवान्मदनन्तार्त्तिजयीतथाभ
व ॥ विपिनन्दहातिस्फुटंनुयोनदहत्येपद
वस्सकिन्तृणम् ॥ १० ॥ यदिदेवनमां
विलोकसेकरुणासान्द्रतरेणचक्षुषा॥ तद
नन्यगतेरुमापतेभवितामेवदकी दृशीद
शा ॥ ११ ॥ अयिदेवसमुद्धृतास्त्वया
बहवोदीनज नाभवा ब्धिनः ॥ ममदीन
तमस्पतुप्रभोकथमुद्धारविधौ विलम्बसे
॥ १२ ॥ कथमप्यधुनामयाप्रभोत्वमिशु

द्वंविनियोजितंमनः।जगतीह्यचराचरात्म
केभवदन्यन्नविलोकतांमनाक् ॥ १३ ॥
भवतो भवतापहारिणोहृदिभावोभवयस्य
जायते ॥ निजवंशपरम्परोद्धृत्तोकिमुत
स्यास्तिविभोविचारणा ॥ १४ ॥ द्विजभूप
तिचूडयो द्विजस्त्वायिरागन्तनुतेनसन्तत
म् ॥ सभवेन्निरयैकभूषणन्द्विजतायामपि
तस्यसंशयः ॥ १५ ॥ अयिभूतपतेभव
द्वतेरिहयन्मानसमास्तिनास्पदम् ॥ परम
द्वयमक्षयंशिवंशिवकिन्तस्यभवेदुतास्पद
म् ॥ १६ ॥ हरचेदधुनानदुर्द्धरांहरासित्वं
ममानसींव्यथाम् ॥ हरतातव्रताहिंविष्ट
पेकथमुच्चैःपदमेष्यतिस्फुटम् ॥ १७ ॥
अयिनाथकूपारसाम्बु धिम्भगवन्तम्भव

मेदिसेवनम् ॥ सकृदप्यनुरागतोऽर्च्चय
न्मनुजस्त्वांसुरतांनयातिकिम् ॥ १८ ॥
तवचेद्धुनानमानसे करुणोच्चैस्सहजा
विजृम्भते ॥ तदुमेशवदातिविस्फुटांकि
मितासाशरणञ्जगत्त्रये ॥ १९ ॥ जग
ताम्पितरित्वयिप्रभोसतिसम्पालनकर्म्म
णिक्षमे ॥ सुविवेकहृदेकसम्पदापरिचेयः
कृतिनेहकःपरः ॥ २० ॥ अयिपश्यासिना
थसर्वतःकिमुमान्दीनतमंनवीक्षसे ॥ अ
पिसन्नखलुसर्वतःश्रुतिस्त्वंशृणोष्यार्त्तरवंक
थम्मम ॥ २१ ॥ करुणात्वयिविश्रुतेश
याकगतासम्प्रतिसावदाशुमे ॥ शरणाग
तमेवमांयतस्समुपेक्षास्पदमेवमन्यसे ॥
॥ २२ ॥ गुरुतांलभतेकिमुप्रभोत्वयिरागं

नविधायमानवः ॥समुपैतिसमुन्नतम्पदं
किमुसोपानपथंविनाजनः ॥ २३ ॥ गिरि
शत्वयिरागिणांनृणांरिपवोयान्तिन किम्प
राभवम् ॥ किमुसिद्धरसैकसेविनोविजय
न्तेकथमप्युतामयाः ॥ २४ ॥ गिरिजेश
गिरीशपाहिमाम्प्रमथाधीश विनाशयाप
दः ॥ शिवदेहिमहोन्नतंशिवम्भवभीति
म्भवभिन्धिसत्वरम् ॥ २५ ॥ त्वदृतेकम
पीशनिर्ज्जरंनहिसेवेमनसाऽपिताचित।
सशिवश्शरणन्त्व मेवमेभवतस्त्वन्मयि
सुस्थिरंशिवम् ॥ २६ ॥ इतिश्रीमत्कौश
ल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयकवि
वराविरचितंश्रीशिवस्तोत्रंसम्पूर्णम् ॥

# ॥ ईशाष्टकम् ॥

ओम् ॥ गौरद्रीश्वरकन्यकोरगपतिःकी
र्तिश्चपञ्चाचलः पत्रम्प्राणसमोपवीत
ममलावक्त्राणियस्यालयः काष्ठाद्वादश
लोचनैकदर्शनाचैलोत्तमञ्चात्मजोतन्त्वा
मच्युतधातृसेवितपदं साम्बम्प्रणौमी
श्वर ॥ १ ॥ दिव्याभाजननान्तहारकजला
त्रैलोक्यसम्पूजिता वैकुण्ठाङ्घ्रिसरोज
जोर्मिपरमागम्भीररम्पारवा ॥ श्रीगङ्गा
परिहायगर्वमतुलं यस्यान्निकेराजते त
न्त्वाम० ॥ २ ॥ कृच्छ्राद्यैर्विविधैस्तपोभि
रपरे रुग्यैर्भृशन्दुर्लभं न्तत्त्वज्ञानमनन्त

सद्भविकद् अन्यन्तदुःखापहम् ॥ नामो
च्चारणमात्रतोपिमनुजा गच्छन्तियस्या
ञ्जसातन्त्वाम० ॥ ३ ॥ देवादेवगुरु
ङ्गुरुङ्गुरुगुर न्त्रैलोक्यसम्पूजित श्च
क्षुःश्रोत्रवरिष्ठहारसुभग म्भस्साङ्गरा
गोज्ज्वलम् ॥ शूलैणीजकुठारपाशडमरु
प्रासासिचर्म्माञ्चितन्तन्त्वाम० ॥ ४ ॥
रोचिष्केशमृगाङ्कवासरकृतो यस्येक्षण
नित्रयः कान्तिः कुन्दहिमाद्रिदुग्धजयि
नी नन्दीपरंवाहनम् ॥ सर्वापद्विनिवार
णैकनिपुणा शैलेन्द्रकन्याङ्गनातन्त्वाम
॥ ५ ॥ योमारन्त्रिजगज्जयोद्धुरतरं स
द्यस्स्वदृक्पाततः कर्णिकाश्रयनामधेयम
करो स्स्वर्गौकसाम्पश्यताम् ॥ दीनाना

थमनोरथामरतरुं सर्वाघनाशयश्चैनन्त
न्त्वाम०॥ ६ ॥ यस्मिन्साधुविधायभक्ति
ममला म्पुण्यैःपरैःप्राकृतनै स्संसाराम्बु
धितोऽञ्जसासुमनस स्सन्निस्सरन्तिध्रु
वम् ॥ स्वार्च्चातत्परमानसार्त्तिहरणे नि
त्योत्सुकम्भावतस्तन्त्वाम० ॥ ७ ॥ हे भू
ताधिपतेवृषेश्वरपते हेदक्षकन्यापते हेछ
त्रारिमुरारिधातृवरुण प्रेताधिपादिस्तुत
॥ ध्यानंयस्यभवामयौषधमहो सर्वाधिकं
शोभतेतन्त्वाम० ॥ ८ ॥ इदमीशाष्टकंर
म्य म्भक्त्यायःकोऽपिमानवः ॥ त्रिस
न्ध्यम्प्रपठेदाशु वाञ्छितार्थंलभेतसः ॥
॥ ९ ॥ इतिश्री मत्कौशल्यगोत्रोद्भवल
क्ष्मीनारायणाह्वयकविवरविरचितमीशा

ष्टकस्तोत्रं सम्पूर्णम् ॥

## ॥ शङ्कराष्टकम् ॥

ओम् ॥ कथितममलभक्त्यानिर्ज्जरै
रिन्द्रमुख्यैःप्रथितमखिललोके सद्यशोय
स्यशुभ्रम् ॥ श्रवणगतमनल्पैर्ज्जन्मभि
स्सञ्चितानि क्षपयतिदुरितानित्वान्तम
र्च्चामिशम्भो ॥ १ ॥ हिमवदचलजेश
न्धैनवेशंमहेश ञ्जितगिरिवरकान्तिसद्य
शोऽनन्तशान्तिम् ॥ रविशशिशिखिनेत्र
ङ्काशिकाशुद्धक्षेत्रं शिवशिवदभवन्तन्दे
वसन्तन्नमामि ॥ २ ॥ हरहरदरमुग्रन्दु

स्सहंयाममेतम्भवभवसदद्न्तानन्ददोऽ
नन्तकीर्त्ते ॥ सरसरववरांमेऽरङ्गिरंसा
म्त्रकुर्य्या स्सुरसुरवरपूज्यंशङ्करत्वांनम
मि।३।त्रिपुरदलनदक्षंवीतपक्षंसुपक्षकृत
नटवेरवेशंव्योमकेशंशिवेशम्।जनिमृति
भयहारंमारहारंसुहारं शशधरकरशुभ्रंशु
भ्रकीर्तिंनमामि।४।शमितसमविकारानि
र्जितक्रोधमाराः परिहृतपरिवारास्सद्वि
चारास्सुसाराः ॥ कृतविपिननिवासाःश्रा
स्पते जोविकासाहृदिनिदधातियन्तन्त्वाम
हन्नौमिशम्भो ॥ ५ ॥ कृपणतरवरंमा
म्पाहिकारुण्यसिन्धोवितर गिरिशसौख्य
न्दीनदीनायमह्यम्॥ तवचरणसरोजद्व
न्द्वसेवानुरक्ताभवजमहहदुः खङ्केनुतेया

न्तिभक्ताः ॥ ६ ॥ अवनिधरगुहायामन्ध
कारावृतायान्त्रिभुवनपतिवन्द्यश्रीमहादे
वशम्भो ॥ प्रविशासिकिमपास्यप्रोक्तटो
च्चान्धकारं विततमतितरांसत्स्वान्तमेत
न्मदीयम् ॥ ७ ॥ भवभवतुमदीयासन्त
तम्भाक्तिरुच्चैस्त्वयिशरणगतसाधौनोक
दापीतरस्मिन् ॥ हरहरयमभीतिन्देहिमु
क्तिप्रदायाम्पुरिविबुधनुतायांमेनिवासंस
देव ॥ ८ ॥ शङ्करस्तोत्रमेतद्यः प्रातः
पठतिभक्तितः ॥ मनोऽभिलषितान्भोगा
न्भुक्त्वायातिपराङ्गतिम् ॥ ९ ॥ इति
श्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणा
ह्वयकविवरविरचितं श्रीशङ्कराष्टकस्तोत्रं
सम्पूर्णम् ॥

# शिव स्तोत्रम् ।

ओम् ॥ शिवश्शान्तिदोऽहंशिवंनौमि शान्त्यैशिवेनावृतोऽसौनमोऽस्त्वौं शिवाय॥शिवान्मुक्तिमत्येवभक्ताश्शिवस्यास्थिरा स्याद्रतिर्म्मेशिवेमांशिवाव॥ १ ॥ शिवो ऽस्यास्तिकर्त्ताऽपिभर्त्ताऽपहर्त्ताचतुर्वक्त्रच क्रायुधोग्रस्वरूपैः ॥ पुराणानिवेदाश्चशा स्त्राणिसत्यंवदन्ती त्यसुच्चैस्स्वसाफल्प सिद्धयै॥२॥शिवंशैवमग्गानुराग्येकरागंवि रागैकरागास्पदंराग्यरागम् । विहायानुर गङ्कभोगेषुदूराङ्भजन्तेनयेया न्तितेकिं सुशान्तिम् ॥ ३ ॥ शिवेनैवकारुण्यदृष्या

सुदृष्टाः प्रहृष्टावरिष्ठागरिष्ठाश्चसन्तः।
अनन्तंलसन्तंनितान्तंमहान्तं ययुल्लोक
मालोकिनंलोकपालाः ॥ ४ ॥ शिवायैव
कय्यात्सुविज्ञोवहुज्ञोगतिज्ञो जनानाङ्कु
मार्ग्गेरतानाम् ॥ अशेषंविशेषंसुदाकर्म्म
सर्वंसमभ्यर्च्य नैनङ्गतिङ्कस्समागात
॥ ५ ॥ शिवोद्धदवेद्याद्धिदामेकवित्ता त्स्व
कीयोच्चभक्तिप्रसक्तैकचित्तात् ॥ महादी
नवन्भोस्सुकारुण्यसिन्धो श्शिवाकाङ्क्षि
चेतोऽपगामाऽपिजातु ॥ ६ ॥ शिवस्या
ङ्घ्रिकञ्जभृङ्गंशशक्तिंदये निजेहृत्सरोजे
निधायार्च्चयत्ले ॥ क्षणंवाक्षणार्द्धम्परान
न्दभाज स्स्वयत्नेभवन्त्यऊवेरकम्मर्णा
शाः ॥ ७ ॥ शिवेपञ्चबाणान्तकेबाणसे

व्ये स्वभक्तायनिर्बाणदेदेवदेवे ॥ सम
स्तम्प्रपञ्चे द्भवंवस्तुजातं निरस्यप्रस
न्नात्वजस्त्रंमतिर्म्मे ॥ ८ ॥ शिवव्योमके
शप्रजेशादिकेश ग्रहेशक्षपेशानलाक्षाद्रि
जेश भुजङ्गेन्द्रहाराघहारिन्पुरारे भुज
ङ्गप्रयातैस्स्तवस्त्वन्मुदेस्तात् ॥ ९ ॥
शिवशिवदशिवेशशेष भूपप्रणुतिततिः
प्रणयार्द्रचेतसेयम् ॥ अनितरमतिनाम
याकृतातेदिशतुपरंरुचिरं स्थिरम्पदंमे
॥ १० ॥ शिवनुतिमितिसम्प्रवृद्धरागः
प्रणिहितमानसकोऽशिवावलम्बः ॥ ज
नइहशृणुयादथोपठे यस्साशिवमुपैतुभवे
दसौशिवाय ॥ ११ इति श्रीमत्कौशल्य
गोत्रोद्भवलक्ष्मीनारायणाह्वयकविवरवि

रचितः श्रीशिवस्तववसम्पूर्णः ॥ १२॥

## ॥ शिवाष्टकम् ॥

ॐ ॥ सुश्रीविश्राणनकरशङ्कर नि
जशङ्करस्यशङ्करणे ॥ घृतदृढतरवर
परिकरमनवरतन्त्वामहम्भजेसुसहम् ॥
सुसितमनोहरकान्तिङ्कृत शरणागजन
महार्त्तिभरशान्तिम् ॥ भुजगविभूषितदे
हङ्कमपि दधेहृदिसुरेशनतिगेहम् ॥२॥
रिद्धेरपरिमितायाविशदतरायाः कुशाग्र
निशितायाः ॥ बुद्धेरपिकिमुवसतिस्सभ
वति नोयश्शिवेशतवभक्तः॥ ३ ॥ विश्व

मशेषमशिवतस्समवति सततङ्कृपापं योधिर्य्यः ॥ तमिहविहायभवन्तंशिव शिवभाजोभवन्तिकेभुवने ॥ ४ ॥ सारासारविचारणानि पुणाधियोयेभवन्तिभवभुवने ॥ भवदपचितिषुविमुखता ङ्कथमपि किमुतेदधत्यहोकृतिनः ॥ ५ ॥ नियमितमनसाम्पुंसां मित्रकलत्रात्मजादिविरसानाम् ॥ विहितविपिनवसतीनां सुमतीनामसिशिवत्वमेवाप्यः ॥ ६ ॥ आनतगोधिमुरेशैरर्च्चितमर्च्चंति शिवाय शिवतवयः ॥ चरणसरसिरुहमन्तकाशिरसिचरणयुगमुदेतिसविधाय ॥ ७ ॥ स्तोमःस्तौतिसुराणाम विरतमुदयायसुप्रभावंयम् ॥ तमिहमहेशंसुमतिस्स्तोतु

मनास्सन्ततंनकोभवति ॥ ८ ॥ सिद्धनु
तस्यमयैतल्लक्ष्मी नारायणेनपरिकलित
म् ॥ अष्टकमिष्टदमवतुश्रीगिरिजेशस्य
सुप्रमोदाय ॥ ९ ॥ इतिश्री मत्कौशल्य
गोत्रोद्भव लक्ष्मीनारायणाक्ष्यकविवरवि
रचितं श्रीमन्महादेवाष्टकस्तोत्रं सम्पू
र्णम् ॥ ॥ ॥

## ॥ भैरव दशकम् ॥

ॐ ॥ सर्व्वोकोयोभवितुंवाञ्छतिसुत
रांसुधीतमोमनुजः ॥ सकिमुनभैरवभव
तोभवतोऽप्ययदङ्घ्रितो यजंश्रयते ॥

॥ १ ॥ इहभवभेदिनिसुभगेसुभविकभ
रितेभवेनभवनगरे ॥ भगवन्भैरवभक्ता
न्भावयितुम्भव्यमान्ययोजिभवान् ॥
॥ २ ॥ गरिमधुरांश्रुतिमधुराङ्गुणिनां
सुगुणान्वयाविताङ्कविताम् ॥ नपुमा
नयतेसुयते विबुधपतेरपचितिंविधायन
ते ॥ ३ ॥ विशदमतिस्सुकृतिपति स्सु
रनरभुजगेषुयस्त्वदङ्घ्रिरतिः ॥ सकिल
विपुलकलुषावलिविदलन कुशलावलो
कनो स्तिनाकिम् ॥ ४ ॥ शङ्करतनुरत
नुमहामहिमहा पूरपूरणेनिपुणः ॥ भैर
वभैरवसंसृतिहारिमनोहारि नामकस्त्व
मसि ॥ ५ ॥ वीराधिपनुतभैरवनिजज
नविपदम्बुदानिलाङ्घ्रिनते ॥ भगवा

निहभवतिभवान्मम शुभसञ्चयविधान
रसिकमतिः ॥ ६ ॥ अयतेसकिमुनमनु
जस्सुरसमभिलषिममनुत्तमंनुपदम् ॥
भवदनुरतिभरभरितेय न्मनसितवस्मृति
इसमुल्लसति ॥ ७ ॥ विनयविभूषितव
पुषोभवदुत्सववासरेयथाविभवम् ॥ से
वन्तेऽ त्रभवन्तंयेतेदेवेशकिन्नसुरवन्द्याः
॥ ८ ॥ श्यामोल्लासिशरीरम्प्रियतमधी
रं सुपर्वकुलहीरम् ॥ दुर्न्नयहृदयकरीरंम
नसिदधे हम्मुदाकमपिवीरम् ॥ ९ ॥
वस्तुकिमस्तितदाऽवरयत्तवकरुणा स्पदे
षुनोपनमेत् ॥ तत्किङ्कम्मजगत्यांयन्न
श्रयतेतरामहोलुब्धान् ॥ १० ॥ सिद्ध
नुतस्यमयासौ लक्ष्मीनारायणेनपरिणमि

तः ॥ भूयाद्दशकस्तवकोभैरवदेवस्यसुप्र
मोदाय ॥ ११ ॥ इतिश्री मत्कौशल्य
गोत्रोद्भव लक्ष्मीनारायणाह्वयकविवरवि
रचितं श्री भैरवदशक स्तोत्रं स्सम्पू
र्णम् ॥

# अथ मल्लिकार्ज्जुन दशकम् ।

ॐ ॥ यत्पादपङ्कजपरागसरागचे
ता जेताभवत्यतितरांसुतरांरिपूणाम् ॥
श्रीश्रेणिसंश्रितमथाश्रितभीहरन्तं श्रीम
ल्लिकार्ज्जुनमहंशरणम्प्रपद्ये ॥ १ ॥ यंसि
द्धसिद्धिनिचयंविनपस्वभावा भावानुरक्त

सुविरक्तसमप्रभावाः॥ संसेव्ययान्तिपरम
म्पदमैश्वरन्तंश्रीम० ॥ २ ॥ यन्नामसं
स्मृतिरपिप्रणिहन्तिपापं सद्यस्सुदुस्तर
मिदन्त्रिविधञ्चतापम् ॥ तंसर्वशक्ति
निलयंविलयच्छिदन्तःश्रीम० ॥ ३ ॥
यद्भक्तिभावविमुखो विमुखोग्रयोनि क्ले
शानुभूतिरसिको रसिकोमृतीनाम् ॥ म
र्त्योभवत्यतिसितस्थिरकीर्त्तिकन्तंश्रीम०
॥ ४ ॥ जातंयतोभगवतोजगदेतदादौ
यस्मिन्समुल्लसतिसम्प्रतिसन्ततन्तत् ॥
अन्तेतदेष्यतिचयत्रसमंलयन्तंश्रीम० ॥
॥ ५ ॥ दुग्धेन्दुकुन्दजलजस्फटिकावले
प ध्वांसानिदक्षभासितोल्लासितोरुदेहम् ॥
रुद्राक्षशोभितजटाञ्चितमप्युदारं श्रीम

॥६॥ यस्यप्रसादलवमप्याधिगम्यपूर्णम्ध
व्यवृजंवृजतिसान्वयएवतूर्णम् ॥ हेतुन्त
मीतिविगमस्यजगन्निकेतंश्रीम० ॥ ७ ॥
ध्यात्वायदङ्घ्रियुगलंयुगलङ्घिवन्द्यम्प्रा
ग्पोल्लसाद्भिवदम्भवदान्तिसिंहम् ॥ म
र्त्यस्सुराद्यसुलभांलभतेगतिन्तं श्रीम०
॥ ८ ॥ अर्च्यस्समर्च्यभवतीहमुदाजनो
यस्तुत्वाऽपियम्भवतिसंस्तवनीयसत्वः ॥
स्मृत्वैवयम्भवतिसत्स्मृतिरीश्वरन्तंश्रीम
० ९ ॥ गायान्तियंशिवमयंसदयंनुवेदाः
खेदापनोदनकृतेचजनात्रिभेदाः ॥ तंसर्व
रूपमनिरूप्यमथाप्यरूपंश्रीम० ॥१०॥
सन्ध्यात्रयेपठति यश्शुभकारिरागादेतद्ध
सन्ततिलकादशकंमनुष्यः श्रीमल्लिका

र्जुनकृपारसभाजनंसप्रप्नोत्यपायविधुर
म्पदामिन्दुमौलेः ॥ ११ ॥ इतिश्रीमक्तौ
शल्यगोत्रोद्भवलक्ष्मीनारायणा ह्वयक
विवरविरचितं श्रीशैलस्थमल्लिकार्ज्जुना
ख्यज्यो तिल्लिङ्गदशक स्तोत्रंसम्पू
र्णम् ॥

## ॥ विन्ध्येश्वरी दशकम् ॥

ओम् ॥ सुरैस्सिद्धैर्न्नद्धैर्मृगमहिषग
ण्डैरिभवरैस्सरोभिस्सदृक्षैर्गवयचमरी
भिर्न्निर्झरैः ॥ पतद्भिः पञ्चास्यैर्म्मणिख
निभिरुच्चैश्चशिखरैर्नवि न्ध्येवन्द्येसम
वतुवसन्तीभगवती॥१॥ प्रचण्डम्प्रोद्दण्डं

गुरुरवसमापूरितदिशमहोवंग सिंहङ्क
नकगिरिरूपंश्रितवती ॥ गदाचर्म्मासी
षुत्रिशिखगुणचापारिदधती चरन्तीवि
न्ध्याद्रौप्रदिशतुशिवंमेशिववधूः ॥ २ ॥
स्वभक्तस्वान्ते स्थप्रबलतरतापप्रशमनी
दधानासंश्ले शङ्कगिरिशतरुणाऽनन्तक
रुणा ॥ उरोजोद्यद्गुच्छाकरवरदलाने
त्रमधुपाविमुक्तिंविन्ध्यस्था प्रवितरतुमेक
ल्पलतिका ॥ ३ ॥ मदोन्मत्तेभेन्द्र श्रुति
पटपटध्वानदलित स्फुरद्दर्प्पोद्रेक प्रतनु
मृदुसंलापरिपुकाः ॥ श्रितावान्दिव्रातैर्द्धृ
तकनकदण्डैरपिनरै ब्रजन्त्येकेलोके तद
पिगिरिजेत्वन्नतिफलम् ॥ ४ ॥ महोद
ग्रैश्शैलैःपारिमितिविहीनोच्चविपिने र्न्नदैः

पारावारै रथचतटिनीभिश्चनगरैः ॥ स
माक्रान्ताक्रान्ता दिग्भिनिकरेणापिपशु
भि र्द्वरेयन्तेशक्त्या नचलतिशिवंविन्ध्य
वसते ॥ ५ ॥ खदाज्ञप्तोमातः प्रतिदि
नमसावुष्णाकिरण स्समेषांलोकाना न्ति
मिरमपिजाड्यङ्क्षपयति ॥ सुधास्राव
ष्टै स्सकलतनुसन्तापदमनै स्सुधारश्मि
श्शीतै र्ज्जनयतिचशान्तिस्वकिरणैः ॥
॥ ६ ॥ भयात्तेविन्ध्यस्थे सुरनरसुरारि
स्तुतपदे वहिस्स्थोऽन्तस्स्थोऽग्नि र्ज्ज
नयातिनखेदन्तनुभृताम् ॥ महोर्मैर्य्याकु
र्वं न्निनदमानिशंशम्बरनिधि र्विलोलैःक
ल्लोलैः क्षितितलमपिप्लावयतिनो ॥
॥ ७ ॥ महापुण्यारण्ये कृतवसतिधन्ये

ऽतिरुचिरे सुरैर्वन्द्ये विन्ध्ये
धृतधृतिभरैर्लोकजननि ॥ त्वदीयभ्रभ
ङ्ग प्रतनुलवमेत्यैवजगतीं विधिर्विष्णू
रुद्रो रचयतिचपातिक्षपयति ॥ ८ ॥ म
हत्त्वन्तेमातः परिमितिविहीनोच्चविभवे
चतुर्वक्त्रोऽप्युच्चैः खलुनपरिमातुंयिधिर
लम् । अतस्त्वत्पादाब्जंनिजहृदिनिधाया
र्चितपदे भजेत्वामेवाह म्भगवतिभवानी
तिसततम् ॥ ९ ॥ जनास्तावल्लोके ज
ननिविपदांसन्तिविषया स्सुविद्याभिस्ता
व स्थिरतरफलाभिर्विरहिताः ॥ नताव
त्सन्तीन्द्र प्रमुखमकुटैर्घृष्टचरणा ऽशर
ण्यम्पादाब्जं हृदिनदधतेयावदिहते ॥
॥ १० ॥ अयिभगवतिविन्ध्यवासिनी

मांमदाभिहितां स्वनुतिंश्रुतौनिधाय ॥ भवभयभरभेदिनामधेयभवमवभीति विभेदिनीममस्वम् ॥ ११ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मीनारायणाह्वयकविवरविरचितं श्रीविन्ध्येश्वरीदशकंस्तोत्रं सम्पूर्णम् ॥

## ॥ देव्यष्टकम् ॥

ॐ॥ शरणगजनहृष्टां सिंहपृष्ठोपविष्टां हरिपुरहरवेधो मूर्द्धघृष्टाङ्घ्रिपृष्ठाम् ॥ विबुधवरवरिष्ठा न्दुष्टचेतोदविष्ठां सुगुणगणगरिष्ठान्देव्यहन्त्वाम्प्रपद्ये ॥ १ ॥ शरणगपरिपात्रींसम्पदोघप्रदा

त्रीं सकलभुवनधात्रींसन्मतेस्संविधात्री
म् ॥ निखिलकलुषभेत्रीं शेमुषीसम्प्रणे
त्रीं सुररिपुपरिजेत्रीन्देव्यहन्त्वांनमामि ॥
॥ २ ॥ क्षितिधरवरकन्येसर्वदेव्यग्रगण्ये
त्रिभुवनतलधन्ये तारितान्येशरण्ये ॥ क्ष
णमपियतचित्ता भक्तिवित्तास्स्वचित्तेनि
दधतिभवतींये संसृतिंयान्तिकिन्ते ॥३॥
भगवतिमयिदीने पापकर्म्माम्बुमीने सु
भगगुणविहीनेकामकोपादिलीने ॥ कुरु
सकरुणदृष्टिक्षेपमाक्षेपवर्ज्जे शरणागस
मुपेक्षा कीर्त्तिहेतुःकिमार्ये ॥ ४ ॥ अमि
तदुरिततूल व्रातदाहेकृशानुः कुमतिति
मिरभार च्छेदनेतीक्ष्णभानुः ॥ शरणग
जनकाम प्रापणेकामधेनु-र्ज्जननिजनन

बाधा म्बाधतान्त्वत्पदाब्जम् ॥ ५ ॥
चितदुरितभराणां साधुनिन्दापराणाङ्कु
प्रथरतवराणां हिंसकाग्रेसराणाम् ॥ भग
वतिहतमेन स्वत्प्रसादान्नराणा न्त्यज
तुतदपिमान्ते किङ्करङ्किङ्कराणाम् ॥
॥ ६ ॥ सुकृतभरहरेभ्योऽकीर्यसम्पत्करे
भ्यो भवभयजनकेभ्यो दीनताहेतुकेभ्यः
॥ शिवतरुखनकेभ्योऽथैवकामादिकेभ्यो
ममकुरुपरिमोक्षं मङ्क्षुविश्वेश्वरित्वम् ॥
॥ ७ ॥ त्वमसिजननिदेवो देवतादेवता
नाम्भगवतिजगदम्ब क्षेमसम्पत्प्रदाह
म् ॥ सुरनुतपदपद्मे मानसंमेशिशोस्ते
चरणयुगलसेवा माश्रयत्वेवनित्यम् ॥
॥ ८ ॥ दैन्यष्टकमिदंरस्य न्त्रिकालंयः

पठेन्नरः ॥ चत्वारिलस्यत्रर्द्धैरन्नायुः की
र्तिर्य्यशोबलम् । ६ ॥ इतिश्री मत्कौशल्य
गोत्रोद्भव लक्ष्मीनारायणाह्वयकविवरवि
रचितं श्रीदेव्यष्टकम् सम्पूर्णम् ॥

## ॥ अन्नपूर्णाष्टकम् ॥

ॐ ॥ सिद्धैस्सिद्धिकृतेघृतास्वहृदिया
यामाहुराद्याम्बुधा व्याप्तंविश्वमिदंयया
मत्कृति र्य्यस्यैयतो भूज्जगत् ॥ यस्या
स्सर्वजनो मिगाञ्जातिकृपां यस्यांसमग्रा
गुणा नित्यंसात्वतुसान्वयम्भगवती माम
न्नपूर्णेश्वरी ॥ १ ॥ यादेवैर्विनिबद्धपा
णियुगलैः प्रेमोल्लसद्दृष्टिभिर्न्नम्रांसै

हृतिशालिभिः सुरुचिरप्रस्विन्नगण्डस्थ
लैः।लालित्योल्लसदर्थपद्यरचनासंसक्त
चित्तैस्स्तुतानित्यंसावतु० ॥ २ ॥ याम्ब्र
ह्माण्डसहस्रपालनविधौ सन्नद्धमध्योद्
धुरा ङ्कारुण्याञ्चदुदारहारिहृदयां संसे
व्यभक्त्यासकृत् ॥ दारिद्र्यंनसमीक्षतेस
मयते मर्त्यो पिदेवश्रियं नित्यंसावतु०॥
॥ ३ ॥ कारुण्येनययोल्लसंच्चग्तिया श
क्त्यासकृद्वीक्षितो निर्व्याजन्धरणीतलेऽ
पिनिखिलेभूत्वास्पदंश्रेयसाम् ॥ यात्य
म्भोजनिजादिभिःपरिणुतंमर्त्यैस्समुच्चैः
पदं नित्यंसावतु० ॥ ४ ॥ प्रेमोद्रेकभृता
निजेनमनसा भूत्वाऽतिनम्रोनरो यस्यै
साधुनमोविधायलभते तूर्णम्फलंवाञ्छि

तम् ॥ श्रीणांश्रेणिभिरञ्चितासुरनरैस्सं
सेविताङ्घ्रिद्वया नित्यंसावतु० ॥ ५ ॥
नित्यानन्दघनाविनाशिविमल प्रद्योतिपू
र्णात्मनो यस्यास्सर्वमिदञ्चराचरमहोस
थस्समुज्जृम्भते ॥ स्वीयांशक्तिमथावल
म्ब्यविविधै रूपैश्चरन्तीपरा नित्यंसाव
तु० ॥ ६ ॥ नानादुर्गतिदुर्द्धरामयहर
न्दुष्प्रापसम्पत्करं वाञ्छासिद्धिविधानक
र्म्मचतुरं सञ्चय्यसर्वामरम् ॥ यस्यानि
र्ज्जितमानसोमनुमहो जप्त्वैतिभक्तः श्रि
यं नित्यंसावतु० ॥ ७ ॥ यत्तेन्नेऽखिल
सिद्धयोऽनुचरता मालम्ब्ययस्यामिह प्रे
मप्रौढिभृदन्तरात्मसुकृतं साफल्यमालि
ङ्गति ॥ निश्शेषत्रिदशापरप्रतिकृतिस्त्रै

लोक्यरक्षोत्सुका नित्यंसावतु० ॥ ८ ॥
विपदपहारिजनानाम्भवता दनिशंशिव
प्रदम्पठताम् ॥ लक्ष्मीनारायणकृत म
ष्टकमिदमन्नपूर्णायाः ॥ ९ ॥ इतिश्री
मत्कौशल्यगोत्रोद्भव लक्ष्मीनारायणाव्ह
यकविवरविरचितं श्रीमदन्नपूर्णाष्टकस्तो
त्रं सम्पूर्णम् ॥ ॥ ॥

## ॥ सिद्धमातुर्देव्याअष्टकम् ॥

ॐस्वस्तिश्रीगणपतयेनमः ॥ याचि
न्मात्रस्वरूपा श्रुतिततिरितियांस्तौतिसृ
ष्टयेदंयस्यैदेवानमस्ते विदधातिसुमना
स्सद्यतोयातिसौख्यम् ॥ भक्तोयस्यास्स

मच्चोंनिवसातिनितरां शक्तिवर्गेश्चयस्या
सामाम्पायादपायात्त्रिभुवनजननी सर्वत
स्सिद्धमाता ॥ १ ॥ यानित्यंसिद्धसंघैः करपु
टविलसद्भालदेशैस्सुवेशैस्सद्भावेश्चारुरा
वेद्धृतिभरभरितस्वान्तरंगैर्नताङ्गैः ॥
वेदान्तार्थावलम्बिश्रुतिसुखदपदैःस्तूयते
स्तोत्रच्छन्दैस्सामाम्पा० ॥ २ ॥ यामिन्दु
भ्राजिभालांमणिमयमुकुटद्योतिदिक्चक्र
वालां सद्भूषाभूषिताङ्गींरुचिमपिदध
तीन्दीप्तिवृन्देनगाङ्गीम्॥संसेव्यस्वच्छ
भावात्सकृदपिवहुशोवाञ्छितार्थां नयन्ते
सामाम्पा० ॥ ३ ॥ कारुण्योल्लासशा
लीकृतसुकृतभरप्रौढरागैकपाली मत्सम्प
त्सिद्धिकारीत्रिविधदुरितहृद्भक्तचेतोऽपहा

री ॥ साङ्गोऽपाङ्गोयथोचैस्सकृदपिविहि
तोहन्तिदारिद्र्यजातंसामाम्पा० ॥ ४ ॥ य
स्यैभक्त्यानिवेद्यस्वकृतमपिसकृत्कर्म्मशु
द्धंमनुष्योभूत्वाऽत्रसत्कीर्त्तिपात्रङ्गुणिमुकु
टमणिःश्रीमदग्रेसरश्च ॥ कल्याणैकस्वरू
पंश्रुतिनिकरनुतं सत्पदंयात्ययत्नात्सामा
म्पा० ॥ ५ ॥ सत्पुत्रम्पुत्रकामोदिवि
पदभिमतांसम्पदंसम्पदर्थीविद्याकाङ्क्षी
सुविद्याङ्गद कलितवपुर्न्निर्ग्गदस्वऽत्रच य
स्याः ॥ सत्कीर्त्तिकीर्त्तिलिप्सुःप्रबलरिपु
जयंयातिशीघ्रञ्जिगीषुस्सामाम्पा०॥६॥
आज्ञामालम्ब्ययस्याजगदिदमखिलं सं
विधत्तेविधाता पातिश्रीचक्रपाणिर्हरति
पुररिपु र्भासयत्युष्णरश्मिः ॥ वातोवा

स्याश्रयाशोज्वलातिसितकर इशीतयत्ये वनित्यं सामाम्पा० ॥ ७ ॥ यस्यांसंवित्सरस्यांश्रुतिनुतगरिम ख्यातिवाराश्रिता यां मग्नस्वान्तोनितान्तङ्क्वचिदपिनपुन स्स्वान्तसन्तोषमेति ॥ तत्वज्ञानैकलभ्यामनुभवतितरां शान्तिसम्पत्तिवृद्धिं सामाम्पायादपायात्त्रिभुवनजननी सर्वतस्सिद्धमाता ॥ ८ ॥ सिद्धमातुरिदमष्टकं शुभंसादरम्परिपठन्प्रगेनरः ॥ सन्निधिं व्रजतिसन्निधिम्परञ्जागतं समनुभूय भावुकम् ॥ ९ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मीनारायणाह्वयकविवरविरचितं श्री सिद्धमातुर्देव्या अष्टकस्तोत्रं सम्पूर्णम् ॥

# सिद्धमातुर्देव्याअष्टक स्तोत्रम् ।

ॐ नमः ॥ सिद्धिश्रेणिश्रितेदेविसि
द्धसङ्घसमर्च्चिते ॥ सिद्धिवितरमेसद्यः
सिद्धमातर्न्नमोऽस्तुते ॥ १ ॥ देवित्वंमे
भवाविश्री त्वामेवाहंसमर्च्चये ॥ सर्वन्त्व
त्तोऽभिवाञ्छामिसिद्धमा० ॥ २ ॥ सुरा
सुरनरैर्भक्त्यासंसेवितपदाम्बुजे ॥ स्या
महन्त्वत्कृपापात्रंसिद्धमा० ॥ ३ ॥ येन
येनसुखंयद्य ल्लब्धन्देवेन्द्रवन्दिते ॥ तेन
तत्वत्प्रसादेनसिद्धमा० ॥ ४ ॥ त्वयिमे
स्तुस्थिरोभावो भवतादनिशंशिवे ॥ स्या

च्चतेमयिकारुण्यांसिद्धमा० ॥ ५ ॥ यो
जनस्तवपदाम्भोज रसपानमधुव्रतः ॥
तस्याशुहरदुःखौघंसिद्धमा० ॥ ६ ॥ दी
नो स्मिगुणहीनो स्मि देव्य स्मिरन्त्वरा
यण ः ॥ मयिदृष्टिमनाग्धेहिसिद्धमा० ॥
॥ ७ ॥ शरण्यासिस्वभक्ताना न्दुर्ज्जना
नांमदापहा ॥ शुभंमे स्तित्वदायत्तं सि
द्धमातर्न्नमो स्तुते ॥ ८ ॥ सिद्धमात्रष्ट
कम्भक्त्या यःपठत्यमलाशयः ॥ सिद्धि
मनोरथानांस गच्छत्येवनसंशयः ॥ ९ ॥
इतिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मीना
रायणाह्वयंकविवरविरचितं श्री सिद्ध
मात्रष्टक स्तोत्रम् ॥

# ॥ अथ श्रीसङ्कटाऽष्टकम् ॥

ॐ नमः ॥ आद्यायाशर्मणेयांनिदध
तिहृदये पाल्यतेऽयंययैवं यस्यैकुर्वन्त्यज
स्रंनमइतिविबुधा विश्वमेतद्यतोऽभूत् ॥
यस्याः पादाम्बुजार्चाहरतिभवभयं वैभ
वम्भातियस्यांमांनित्यं सङ्कटाख्यासम
वतुकृपयाश्रीमतीसङ्कटाऽसौ ॥ १ ॥
दुःखाम्भोधौनिमग्नैरनधिगतपदे दीन
दीनैर्मनुष्यै भक्त्यासञ्चिन्तितायास्थिर
तरहृदयैर्न्निर्ज्जनेकाऽपिदेशे ॥ तेषांसद्यो
ऽभिलाषानकलितविषया न्पूरयत्यन्त
ञ्जसाऽलं मांनित्यं० ॥ २ ॥ आनन्दा

खण्डसंविद्विकृतिविरहितं ज्योतिरद्वैतरू
पां शुद्धांवाकुस्वान्तवदूरामपरिचितगुणा
ङ्गायतीयंश्रुतिर्य्याम् ॥ संसर्गाद्याङ्गु
णानामपिचवदतिया न्देवमर्त्यादिरूपां
मांनित्यं ॥ ३ ॥ विश्वस्माद्विश्वमेतत्सक
लमशिवत स्सर्वदाशर्वशक्त्या हित्वावै
षम्यमारात्करुणरसमयै दृष्टिपातैर्य्यो
च्चैः ॥ सिद्धैसंरक्षितंसत्परमनुभवतिश्रे
यसामाशुराशिं मांनित्यं० ॥ ४ ॥ भ
क्त्यायस्यैकृतंसत्सुकृतमथजप स्संस्कृता
नांमनूना मभ्यासश्चश्रुतीनांसमटनमस
कृत्तैर्थमिष्टिश्चहोमः ॥ अन्यद्वाकर्म्मध
र्म्यंवितरतिसुतरा मक्षयांमोक्षलक्ष्मीं मां
नित्यं० ॥ ५ ॥ श्रीलिप्सासम्भृतान्तः

श्रियमिहविपुलां सूनुकाङ्क्षीसुसूनुं वि
द्याकाङ्क्षीसुविद्यांरिपुकुलविजयञ्जेतु
कामस्स्वयत्नात् ॥ रोगीरोगप्रणाशंसम
मपिसुमना भक्तितोयातियस्यामांनित्यं०
॥ ६ ॥ यस्यास्संसेवितायाअचलपदकृ
ते भक्तिभावेनमर्त्यैं ईशोकोच्छेदीप्रताप
स्ससततभविकद् स्सवमिष्टन्तनोति ॥
चञ्चत्पुण्यैकलभ्यप्रपदयुगनति स्सर्व
सिद्धिप्रदार्च्चा मांनित्यं० ॥ ७ ॥ य
स्यांसर्वस्वरोक्षप्रविलसदलिकस्वर्णराजं
त्किरीट भ्राजिष्णुस्वच्छरत्नव्रजरुचिररु
चिप्रोच्चपादासनायाम्।चेतस्सन्धायभा
वाद्भवतिकिलपुमा न्मर्त्यभावाद्विमुक्तो
मांनित्यं० ॥ ८ ॥ सर्वदासर्वदानेन स्तू

यतेयेनसङ्कटा ॥ स्वप्नेऽप्यालोकतेनैव सनरोजातुसङ्कटम् ॥ ९ ॥ इतिश्रीमत्कौशल्य० वि० श्रीसङ्कटाष्टकस्तोत्रं सम्पूर्णम् ॥ ॥ ॥

## । अथ श्रीकृष्णनीराजनम् ।

ॐस्वास्ति श्रीगणेशाय नमः ॥ जय देव जयदेव ॥ श्रीकृष्णस्थिरवैभववैभव भाविनुते । प्रणमामिसुरप्रणुतम्पदकमलङ्खलुते ॥ १ ॥ ज० ॥ जयसुरसङ्घमनोरथपूरणाकल्पतरो । अभिलषितंमम पूरयविधिमुखविबुधगुरो ॥ २ ॥ ज० ॥ जयवसुदेवसमुद्धरचलोन्नतकेतो । जय

जयनन्दयशोदापरमोदयहेतो ॥३॥ ज०॥
जयगोकुलवरभूषणकोटिमदनकान्ते । वि
हितसुरारिविमर्दनकृतसुरदरशान्ते ॥४॥
ज० ॥ ललितकलापकिरीटङ्कनकाङ्ग
दरुचिरम् । व्रजयुवतिव्रजराजितमिह
निदधेसुचिरम् ॥ ५ ॥ ज० ॥ जयकन्द
र्पशतार्जितदर्पदमनशक्ते । कुरुसद
पाङ्गविलोकनमिहमयिनिजभक्ते ॥ ६ ॥
ज० ॥ अलिनीलामलचञ्चलकुटिलाल
ककलितम् । राधालिङ्गितमनिशंनौमि
हसितललितम् ॥ ७ ॥ ज० ॥ जयगि
रिधरकरुणाकरशुभकरकंसारे । सम्पति
तंमामुद्धरभवपारावारे ॥ ८ ॥ ज० ॥ ज
यजयकारिसमर्च्चनकुरुममविलसदयम् ।

चिरपरिचितदृढदुस्तर मोहतिमिरविलय
म् ॥ ९ ॥ ज० ॥ जयभवभयलयकारक
निजजनतारकहे । अपसारयममसंसृति
मभिमर्दितदुरहे ॥ १० ॥ ज० ॥ जयश
रणागतवत्सलसजलजलदसुरुचे । कृप
यदुरितभरमपनयशमयभयंसुशुचे॥११॥
ज० ॥ अच्युतघृतकर्प्पूरैः प्रज्वलितंविम
लम् । नीराजनमङ्गी कुरुफलनिर्वाणफ
लम् ॥ १२ ॥ ज० ॥ योलक्ष्मीनारायण
निर्म्मितमतिरुचिरम् । नीराजनमिहकुरु
तेसुखमयतेसुचिरम् ॥ १३ ॥ ज० ॥ इ
तिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मीनारा
यणाह्वयकविवरविरचितं श्रीकृष्णनीराज
नम् सम्पूर्णम् ॥ ॥ ॥ ॥

# अथ श्रीवज्रेश्वरीनी राजनम् ।

ॐ ॥ जयदेवि जयदेवि ॥ श्रीवज्रेश्व रिभगवतिभवभयदवबृष्टे ॥ निजजनम घमामभितः परिपालितसृष्टे ॥ १ ॥ ज० दक्षदर्प्पलयदक्षेविजितनिजविपक्षे । करु णाङ्कुरुशिवमयिमयिकृतशरणगरक्षे ॥ ॥ २ ॥ ज० ॥ कलिमलविलयविधायि निगिरिशानिगिरिजे । स्थिरतरपरसुखदा यिनिदृशमिहवितरनिजे ॥ ३ ॥ ज० ॥ रोमिनिबीजमुमेतवयस्सकृदाभिधन्ते ॥ स किमुनललिताङ्कविताञ्जननिखलु विध

त्ते ॥ ४ ॥ ज० ॥ सतिसातितवभवहा
रिणिशिवकारिणिचरणे। घृतमतिरिहकुरु
तें किमुनरातिमितरभरणे ॥ ५ ॥ ज० ॥
शशिशकलोल्लसदलिके श्रितमगिमय
फलके । रदजितचम्पककलिके ह्यदिवस
चलदलके ॥ ६ ॥ ज० ॥ जयजयकारि
स्मरणेकृतनमदघहरणे । ममचेतस्तवच
रणे परिजितदनुजरणे ॥ ७ ॥ ज० ॥ नि
जमहिमानमनन्त म्परिगायतिसुजने ।
भावयतिकिमुनभवती सतिशुभमजभव
ने ॥ ८ ॥ ज० ॥ भगवतियेहदिभवतीं
निदधातिविबुधनुते । दुर्लभमपिचतवप
दयान्तिनकिलकिमुते ॥ ९ ॥ ज० ॥ प
रिहृतसुरविपदोघे शरणागतशरणे । भ

क्तिर्भवतुममानिशं मीश्वरितवचरणे ॥
॥ १० ॥ ज० ॥ भवतीम्भवपरशक्ति यो
भजतेऽजनुते । सकिमुकरुणरसशरणंन
जननिभवतिनुते ॥ ११ ॥ ज० ॥ मांनि
जशिशुमतिपिशुनन्दुरितालयमलये । कु
रुकृपयाशुसुखालय मतिशयशोभिदये ॥
॥ १२ ॥ ज० ॥ ईश्वरिघृतकर्प्पूरैः प्रज्व
लितंविमलम् । नीराजनमङ्गीकुरुफल
निर्वाणफलम् ॥ १३ ॥ ज० ॥ योलक्ष्मी
नारायण निर्म्मितमलिरुचिरम् । नीराज
नमिहकुरुते सुखमयतेसुचिरम् ॥ १४ ॥
ज० ॥ इतिश्री मत्कौशल्यगोत्रोद्भव ल
क्ष्मीनारायणाह्वकविवरविरचितं श्रीव
ङ्केश्वरीनीराजनम् सम्पूर्णम् ॥

# अथ श्रीविजयानी राजनम् ।

ॐ ॥ जयदेवि जयदेवि ॥ श्रीविज
येकुरुविजयं ममसुरनिकरनुते । कश्चिज
गतिगुरुगतिदेत्वयिनरुचिङ्कुरुते ॥ १ ॥
जं० ॥ हरिविधिवरुणसुराधिपसम्मदभर
हेतो । सुकृतशतैरपिदुर्ल्लभमोक्षरुचिरके
तो ॥ २ ॥ जं० ॥ अगणितजनिशतस
ञ्चितसुकृतभरैकफलम् । पिबतिचयस्तव
नरसंसकिमुपुनातिकुलम् ॥ ३ ॥ जं० ॥
तवसत्कारमतिर्यः सुमतिरपास्तस्तुते । क
स्यनविकसितहृदयन्तत्सत्कारकृते ॥ ४ ॥

ज० ॥ निजजनकामृत विलसत्कीर्त्तिम
नोज्ञलते । रुचिरनिशंममभवता त्सदप
चितौकिलते ॥ ५ ॥ ज० ॥ जयविजये
भयविलय ङ्कुरुकरुणाजलधे । संविद्धि
तरसुसंविद मवमांरहदवधे ॥ ६ ॥ज०॥
तवभगवतिमधुमधुरं रसमेलाकलितम् ।
पीत्वेच्छतिकिमुमनुजः पुनरमृतंललित
म् ॥ ७ ॥ ज० ॥ यस्मिन्सद्मनिविजये
तवविलसतिवासः । तत्रनकिमुभवतित
रां सम्पत्सुविलासः ॥ ८ ॥ ज० ॥ तव
नीराजनमिति योगायतिजननिमुदा । सं
वित्सम्पदमयते सहयशसासमुदा ॥९॥
गुणाक्ष्यङ्केन्दुमानेऽक्षेभाद्रेशुक्लविधोस्ति
थौ । लक्ष्मीनारायणेनेदं निर्म्मितंविजया

मुदे ॥ १० ॥ इतिश्री मत्कौशल्यगोत्रो द्भव लक्ष्मीनारायणाङ्कयकविवरविरचितं श्रीविजयानीराजनम् सम्पूर्णम् ॥

# ॥ अथ देवीनीराजनम् ॥

ॐ ॥ जयदेवि जयदेवि ॥ श्रीजग
इश्वरिगिरिजे श्रुतिनिकुरम्बनुते । कृपणे
मयिभवतुतरा ङ्करुणाजननिनुते ॥ १ ॥
ज० ॥ जयभवभाविनिभगवति भवभा
मिनिबलदे । भवभयभरपरिभाविनि रु
चिजितनवजलदे ॥ २ ॥ ज० ॥ जयज
गदम्बविलम्बं नकुरुमदुद्धरणे। भवभय
मपनयनगजे दरभरहरचरणे॥ ३ ॥ज०

हरिहरविधिविबुधाधिप वरुणादिकशरण
म् । भगवतिसंसृतिहरण न्तववन्देचर
णम् ॥ ४ ॥ ज० ॥ त्रिभुवनसुन्दरनिन
दं मणिमञ्जुलमगजे । धृतवतिनूपुरयु
गलं स्फुरममहृदयकजे ॥ ५ ॥ ज० ॥
महिषासुरमुखदानवविलयोन्नतकेतो ।दी
नंमामवकृपया परसम्मदहेतो ॥ ६ ॥
ज० ॥ असुरमनोभिद्गर्ज्जित वरकेसरिप
त्रे । त्वयिरमतांममहृदय न्त्रिपुरारिकल
त्रे ॥ ७ ॥ ज० ॥ कमलेतवपदकमले म
मरतिरतिविमला । भवतुचभगवतिमयि
ते करुणाऽनिशमचला ॥ ८ ॥ ज० ॥
अभिनवजलधररुचिरे धृतवरनरमाले ।
तवचरणौभवहरणौ धृतभुजगकपाले ॥

॥ ९ ॥ ज० ॥ वृन्दारकवरवृन्दैः परिणु
तगुणकन्दे । तवपदपङ्कजयुगलंविभव
दमभिवन्दे ॥ १०॥ ज० ॥ यस्तवचर
णसरोज ञ्जननिमुदाभजते । जठरेसख
लुजनन्याः किमुवसतिंलभते ॥ ११ ॥
ज० ॥ देविदिवाकरसितकर मारुतसख
नयने । मामधुनोद्धरकृपया पतितम्भव
दहने ॥ १२ ॥ ज० ॥ कालिकपालिनि
शूलिनि भयचालिनिजगताम् ॥ परिपा
लयभगवतिमा म्पारिपालिनिभजताम् ॥
॥ १३ ॥ ज० ॥ भेरिमृदङ्गाविपञ्ची घ
ण्टाशङ्खरवैः । मन्दिरमम्बतवेद ञ्ज
यतिचवरविभवैः ॥ १४ ॥ ज० ॥ ईश्व
रिघृतकर्प्पूरैः प्रज्वालितंविमलम् । नीराज

नमङ्गी कुरुफलनिर्वाणफलम् ॥ १५ ॥
ज० ॥ योलक्ष्मीनारायण निर्मितमतिरु
चिरम् । नीराजनमिहकुरुते सुखमयतेसु
चिरम् ॥ १६ ॥ ज० ॥ द्वीपेन्द्वङ्केन्दुमा
नेऽब्दे शुक्रेशुक्लेरवेस्तिथौ । लक्ष्मीना
रायणेनेद म्मयाऽम्बाकारितेमुदे ॥१७॥
इतिश्री मत्कौशल्यगोत्रोद्भव लक्ष्मीनारा
यणाह्वयकविवरविरचितं श्रीदेव्यानीरा
जनम् सम्पूर्णम् ॥

# अथ श्रीविश्वेश्वरनी राजनम् ।

ॐ ॥ जयदेव जयदेव ॥ श्रीविश्वेश्वे
रगीरिश प्रणमज्जनबन्धो । करुकरुणा
म्प्रणमतिमयि करुणालसदन्धो ॥१॥ज०
जयकाशीशगिरीश प्रमथेशोमेश । शि
शुशशधरवरमौले सुरनरभुजगेश ॥ २ ॥
ज० ॥ जयगिरिजेशमहेश त्रिदशेशाधी
श। शशिधरफणिधरविषधर मामवजग
दीश ॥ ३ ॥ ज० ॥ जयशङ्करहरश
म्भो दर्शितजननौघम् । अमिलजनिज
नितमधुना हरममदुरितौघम् ॥ ४ ॥ज०
॥ अथकालापकम् ॥ गर्ज्जितनिर्ज्जितनि

ज्र्जर रिपुपरमानन्दम् । वृषमारूढमगूढ म्पुरदंसुखकन्दम् ॥ ५ ॥ ज० ॥ शरद म्भोधरगौरं नाशितपुरपौरम् । निखिल भुवनवरभूषां समसुपमाचौरम् ॥ ६ ॥ज० धृतवरजटाकलापं हृतसंसृतितापम् । श्रुतिपथरिपुसंस्थितये करधृतदृढचापम् ॥ ॥ ७ ॥ ज० ॥ भूतिविभूताकार म्भुजगेश्वरहारम् । हृदिनिदधेभवहारं मनसिज लयकारम् ॥ ८ ॥ विशेषकम् ॥ ललित विलोलतरङ्गं वृजिनव्रजभङ्गम् । मनुमितभुवनविहारक कृतिजनकृतसङ्गम् ॥ ९ ॥ ज० ॥ चञ्चदनुपमरूप म्भञ्जितभवकूपम् । मुक्ताचन्द्रतुषारस्फटिकाम्बुजभूपम् ॥ १० ॥ सन्दधतींसुरस

रितं शिरसाधृतवन्तम् । प्रणमामीशम
नी शन्द्रुहिणादिषुसन्तम् ॥ ११ ॥ ज०
॥ अथयुग्मम् ॥ तालतमालपियाल त्रि
दशद्रुमपुञ्जे । यक्षोरगसुरकिन्नर
परिषेवितकुञ्जे ॥ १२ ॥ ज० ॥ कुमुदो
त्पलकल्हार व्रततीस्वच्छन्दे । कैलासेकृ
तसदनं शर्वमहंवन्दे ॥ १३ ॥ ज० ॥ प्रा
नर्दिनकरवर्णं लम्बोदरमङ्के । दधती
न्दधतङ्गिराजा वन्देलसदङ्के ॥ १४ ॥
ज० ॥ भेरिमृदङ्गविपञ्ची घण्टाशङ्ख
रवैः । मन्दिरमीशतवेद ञ्जयतिचवरवि
भवैः ॥ १६ ॥ घृतकर्प्पूरसुपूरैः प्रज्वालि
तंविमलम् । नीराजनमङ्गी कुरुफलनि
र्वाणफलम् ॥ १६ ॥ ज० ॥ योलक्ष्मी

नारायण निर्म्मितमतिरुचिरम् । नीराज
नमिहकुरुते सुखमयतेसुचिरम् ॥ १७॥
रसेन्दुग्रहभूवर्षे चैत्रेशुक्लस्यादितिथौ ।
लक्ष्मीनारायणेनेद ङ्कृतंश्रीशम्भुतुष्टये
॥ १८ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव
लक्ष्मीनारायणाह्वयकविवरविरचितंश्री
विश्वेश्वरनीराजनम् सम्पूर्णम् ॥

## अथ श्रीभैरवनी राजनम् ।

ॐ ॥ जयदेव जयदेव ॥ श्रीमन्भैर
वभगवन्भवहरविबुधगुरो । मामवशरण

गमीश्वरनिजरक्षणकृदुरो ॥ १ ॥ ज० ॥
जयदुरितौघनिवारणजयकारणजगताम्॥
जयविपदोघनिवारणभयदारणभजताम्॥
॥ २ ॥ जय० ॥ योभीष्टप्रदमीश्वरतवप
दकञ्जयुगम् ॥ सकृदपिपश्यतिसनुकिम्प
श्यतिभवभुजगम ॥ ३ ॥ जय० ॥ नव
जलदद्युतिमुरगैर्भूषितसर्वाङ्गम् ॥ स्व
र्णवर्णकचनिचयन्त्रिभुवनवितताङ्गम् ॥
॥ ४ ॥ जय० ॥ सासिवराभयदण्डत्रिशि
खाहिकपालम् ॥करधृतवरकङ्कालङ्गति
कृतभूचालम् ॥ ५ ॥ जय० ॥ रजनीकर
वासरकरवैश्वानरनयनम् ॥ सुरनरदनुज
समर्च्चितममितदुरितदहनम् ॥ ६ ॥ ज
य० ॥ धृतविमलाञ्जनशोभनभुजगसद्

पवीलम् ॥ दिग्वसनङ्कृतहसनन्त्रिदशा
धिपगीतम् ॥ ७ ॥ जय०॥ त्रिदिवसदन
बरसारंसकलाशुभहारम् ॥ बिलसत्सम्प
त्कारंनरकर्प्परहारम् ॥ ८ ॥ जय०॥ करु
णारसबरुणालयमखिलालयमलयम् ॥ कृ
तदनुजव्रजविलयंस्वजनहृदयनिलयम् ॥
॥ ९ ॥ जय० ॥ दुर्ग्गुणगणभृतिदीनेमा
दृशिभृशमन्दे ॥ भक्तेवत्सलमनिशम्भैर
वमभिवन्दे ॥ १० ॥ जय०॥ कुलकम् ॥
भेरिमृदङ्गाविपञ्चीघण्टाशङ्खरवैः ।, म
मन्दिरमीशतवेदञ्जयातिचव्रराविभवैः ॥
॥ ११ ॥ जय० ॥ भैरवघृतकर्प्पूरैःप्रज्वलि
तंविमलम् ॥ नीराजनमङ्गीकुरुफलनि
र्वाणफलम् ॥ १२ ॥ जय० ॥ योलक्ष्मी

नारायणनिर्म्मितमतिरुचिरम् ॥ नीराज
नमिहकुरुतेसुखमयतेसुचिरम् ॥ १३ ॥
जय० ॥ द्वीपेन्द्वङ्केन्दुमानेऽब्देपौषेकृष्णे
ऽग्निभूतिथौ ॥ लक्ष्मीनारायणेनेदङ्कृत
म्भैरवतुष्टये ॥ १४ ॥ इतिश्रीमत्कौशल्य
गोत्रोद्भवलक्ष्मीनारायणाह्वयकविविरचिर
चितंश्रीभैरवनीराजनंसम्पूर्णम् ॥

# अथ श्रीविष्णुनीराजनम्

ॐ ॥ जयदेवजदेव ॥ श्रीजगदीश्वरावि
ष्णोकरुणाकरजिष्णो ॥ मामुद्धरभवसि
न्धोःकृपयाप्रभविष्णो ॥ १ ॥ जय० ॥
जयलक्ष्मीनारायणपरमायनजगताम्॥ भ

वनुतभवहरहरममकुमतिंहृदयगताम् ॥
॥ २ ॥ जय० ॥ जयगरुडप्रवरासननि
खिलामरकेतो ॥ शरणागतनतजनतापर
निर्वृत्तिहेतो ॥ ३ ॥ जय०॥ जयगरुडध्व
जकेशवसितजलजाक्षहरे ॥ पुरुषोत्तमगो
बिन्दश्रुतिपथलयकृदरे ॥ ४ ॥ जय० ॥
जयनवनीरदसुन्दरहृद्वियतिस्फुरम ॥ को
टिमदनमदभञ्जनभगवतिभवतिरमे ॥
॥ ५ ॥ जय० ॥ जयदुरितव्रजवनदवकृप
णोद्धरणरते ॥ मामवकृपणमनाथन्त्रिभुव
नजनकपते ॥ ६ ॥ जय० ॥ अथत्रयोद
शभिःकुलकम् ॥ त्रिभुवनशयनमनन्तम्भु
जगेश्वरशयनम् ॥ बिलसत्तनुरुचिरच्छ
बिहृतपद्मनयनम् ॥ ७ ॥ जय० ॥ श्री

करकङ्कणशिञ्जित मुखरीकृतचरणम्॥ सृणिपविकेतुयवाम्बुज वरचरणाभरणम् ॥ ८ ॥ ज० ॥ इन्द्रमुकुटमणिदीपक नीराजितपादन् ॥ असुरकुलाकुलभुवन ज्वरहरगुणवादम् ॥ ९ ॥ ज० ॥ वृन्दारक वरवृन्दै स्संस्तुतमजशरणम् ॥ वृन्दावनलरिवृन्दै र्म्मण्डितमघहरणम् ॥ १० ॥ ज० ॥ वररुचिमण्डलमण्डित तडिदुज्ज्वलवसनम् ॥ सजलजलदरुचिरुचिर न्धृतकाञ्चनरशनम् ॥ ११ ॥ ज० ॥ कमलासनपरमासन वरपङ्कजनाभम्॥ कुमतितिमिरभरभेदन खरकरपरमाभम्॥१२॥ ज० ॥ श्रीवत्साङ्कविभूषित मभिनन्दितलोकम् ॥ भृगुपदशंसितयशसम्भाञ्जि

तभवशोकम् ॥ १३ ॥ ज० ॥ कम्बुगदाम्बुजचक्रैश्शोभितकरकमलम् ॥ मण्डनमण्डितवपुपंहृतानिजहृदयमलम् ॥१४॥ ज० ॥ मणिरुचिरोचितभुवनं म्भुवनायतगहम् अलिचुम्बितवमाला मधुमञ्जुलदेहम् ॥ १५ ॥ वरमकराकृतिकुण्डल मणिमण्डितगण्डम् ॥ श्रुतिगतलोचनयुगलं सुररिपुचयचण्डम् ॥ १६ ॥ ज० ॥ चञ्चत्कुञ्चितकुन्तल परिशोभितवदनम् ॥ विगतकलुपजनमानस सरसिजवरसदनम् ॥ १७ ॥ ज० ॥ मदनधनुर्म्मदभञ्जनराजद्भ्रयुगलम् ॥ सुमुकुटरुचिदासीकृत दिनकरनिकरवलम् ॥ १८ ॥ सर्गस्थिति लयकार ञ्जगतामविकारम् ॥ प्रणमामि

सद्वतारं हरिमागमसारम् ॥ १८ ॥ ज०
अच्युतघृतकर्पूरैः प्रज्वलितंविमलम् ॥
नीराजनमङ्गीकुरुफलनिर्वाणफलम् २०॥
ज० ॥ योलक्ष्मीनारायण निर्म्मितमति
रुचिरम् ॥ नीराजनमिहकुरुते सुखमयते
सुचिरम् ॥ २१ ॥ ज० ॥ श्रीमत्कौशल्यगो
त्रकृतिसुकृतिवरः श्रीशपादाब्जभृङ्गस्स
ञ्जातः श्रीहजूरिस्त्रिपुरहरपुरे तत्सुतोवि
ष्णुभक्त्या ॥ लक्ष्मीनारायणाख्योरसनि
धुनिधिभूसम्मितेवैक्रमेऽब्देशुक्रेऽकार्षीद्व
लक्षेशशिनिगुहातिथौ विष्णुनीराजनोक्ति
म् ॥ २२ ॥ इतिश्री मत्कौशल्यगोत्रोद्भव
लक्ष्मीनारायणहृवयकविवरविरचितं श्री
विष्णुनीराजनम् सम्पूर्णम् ॥

# । अथ श्रीविजया दशकम् ।

ॐ सौवर्णाङ्गविमुक्तमांमणिमयी म्भूषाञ्चपाशाङ्कुशो नानावर्णविचित्रितञ्चरुचिर ञ्चैलक्ष्याम्बिभ्रतीम् ॥ देविश्रीविजयेस्मरान्तिभवती ञ्चारुस्मितांयेनरा स्तेषांहस्ततलैकभूषणमहो नोशान्नवः किञ्जयः ॥ १ ॥ सर्वेषान्धुसदामसुव्रतातिका रक्षाम्बुसत्सेकतो धातृश्रीपतिशक्रमुख्य विबुध प्रौढश्रमोयत्फलात् ॥ श्रीशीतांशुसहोदरान्नुविजयेपीयूषतोयज्जनि स्तान्त्वामर्चतियस्सनोभवातीकिं मर्त्योऽपि मृत्युञ्जयः ॥ २ ॥ ब्राह्मण्यादिविभेदबो

धसुब्रुधा स्त्वन्मन्त्रजापस्थिताः शुद्धाचा
रपरागुणैर्बहुविधं इचैतोहरायेनराः ॥ त
न्त्रोक्तेनमनोहरेणविधिना त्वांसम्भजन्ते
ऽनिशङ्क ॥ किन्तान्निर्म्मितिरङ्गनेवस
रसा नान्तर्हरत्यञ्जसा ॥ ३ ॥ देवित्व
द्रसमत्रसोपकरणं सोल्लासपूरंसदा यः
श्रीमान्सकृदेववाह्निरथवा न्निर्वाचतुस्से
वते ॥ यद्यद्वस्तुदुरापमप्यातितरा न्ध्याय
त्यसौचेतसा तत्तत्किंनिजपाणिपल्लवधृ
तं नालोकतेसत्वरम् ॥ ४ ॥ देविस्वान्ध
नधान्यसंन्ततियशः कल्याणदानोद्धु
रां शापानुग्रहशक्तिसर्वसुगतिं स्वीयस्थि
तिप्रौढिदाम् ॥ भावोद्भासितसाक्तिक्रयास्सु
विनया राजन्नयास्सद्दया स्सेवन्तेभुवियै

# । अथ श्रीविजया दशकम् ।

ॐ सौवर्णीं च विमुक्तमां मणिमयी म्भूषा
ञ्चपाशाङ्कुशौ नानावर्णविचित्रितञ्चरु
चिर ञ्चैलद्वयम्बिभ्रतीम् ॥ देविश्रीविज
येस्मरन्तिभवती ञ्चारुस्मितांयेनरा स्ते
षांहस्ततलैकभूषणमहो नोशात्रवः किञ्ज
यः ॥ १ ॥ सर्वेषान्युसदामसुन्नतातिका
रक्षाम्बुसत्सेकतो धातश्रीपतिशक्रमुख्य
विबुध प्रौढश्रमोद्यत्फलात् ॥ श्रीशीतां
शुसहोदरान्तुविजयेपीयूषतोयज्जनि स्ता
न्त्वामर्च्चतियस्सनोभवातीकिं मर्त्योऽपि
मृत्युञ्जयः ॥ २ ॥ ब्राह्मण्यादिविभेदबो

श्वसुबुधा स्त्वन्मन्त्रजापस्थिताः शुद्धाचा रपरागुणैर्बहुविधे इचेतोहरायेनराः ॥ त न्त्रोक्तेनमनोहरेणविधिना त्वांसम्भजन्ते ऽनिशङ् ॥ किन्तन्निर्म्मातिरङ्गनेवस रसा नान्तर्हरत्यञ्जसा ॥ ३ ॥ देवित्व द्रसमत्रसोपकरणं सोल्लासपूरंसदा यः श्रीमान्सकृदेववाह्यिरथवा न्त्रिर्वाचतुस्से वते ॥ यद्यद्वस्तुदुरापमप्यतितरा न्ध्याय त्यसौचेतसा तत्तत्किंनिजपाणिपल्लवघृ तं नालोकतेसत्वरम् ॥ ४ ॥ देविस्वान्व नधान्यसंन्ततियशः कल्याणदानोद्व रां शापानुग्रहशक्तिसर्वसुगति स्त्रीयन्थि तिप्रौढिदाम् ॥ भावोद्भासितमक्तिक्रयास्म विनया राजन्नयास्सद्दया स्सेवन्तेभुविये

ऽन्यदौषदमहो वाञ्छन्तिकिंसेवितुम्. ॥
॥ ५ ॥ नानाभेदमहौषधेशकथित त्वद्यो
गविद्योनरो वैद्योदुर्द्धररोगदारणविधौ ध
न्वान्तरिस्सोऽपरः ॥ यस्सिद्धेश्वरीसिद्धि
मूलिभवतीं निन्दत्यहोमन्दधी र्दुर्भाग्य
स्यकिमस्यमङ्गलकथा लेशोऽपिसम्भा
व्यते ॥ ६ ॥ देवित्वारसरूपिणीश्चविज
ये नित्यम्भृशम्प्रेमत स्सेवन्तेऽपिसकृत्क
थञ्चिदपिये सुश्रेयसामाश्रयाः ॥ तेषा
म्बुद्धिसमृद्धिशुद्धितरता सम्पादनार्थन्तृ
णामपुस्वल्पफलेषुहेतुषुवद श्रद्धाकिमुज्जृ
म्भते ॥ ७ ॥ विप्रक्षत्रियवैश्यपादजमु
खा स्सिद्धर्षिवर्ण्यादयो येकेचिन्मनुजान
येनविजये त्वांसर्वदोपासते ॥ तेषाङ्कि

ननिर्जेनिर्जेऽतिरुचिरा धर्म्मेप्रवृत्तिस्थि
रा सौजन्यञ्चवदान्यताचगुरुता स्यात्स
च्चिराज्जीवितम् ॥ ८ ॥ मातःश्रीविजये
भजद्भवभय प्रोन्माथिसत्संस्मृते लोकेऽ
स्मिंस्त्वद्नारोंक्तिनिरतो यस्त्वांसदोपेक्ष
ते ॥ मातृक्लेशभरप्रदायिजनुषः पापस्य
दुर्म्मेधसःक्षीणाशेषशुभस्यतस्यचरमे जा
नेनकास्याद्गतिः ॥ ९ ॥ येषामुत्तमजन्म
नांशुभवतां सद्वंशजानांनृणां स्वच्छस्वा
न्तभुवित्वदीयपरम श्रद्धालतेहाऽजनि ॥
अर्हान्देववरोचिताङ्गुरुलरा मर्हान्तितेस
र्वतः किन्तत्पुण्यपरम्परापरिमितिं शेषो
ऽपिवक्तुंक्षमः ॥ १७ ॥ इतिविजयादश
क इखलुरुचिभररुचिरेणमानमेपठन् ॥

भवनिविजयभृत्सुतरांमर्त्यो ऽप्यमरत्वमाप्नोति ॥ ११ ॥ इतिश्री मत्कौशल्यगोद्भव लक्ष्मीनारायणाक्वयकविवरविरचितं श्रीविजयादशकं सम्पूर्णम् ॥

# अथ शिवस्तोत्ररत्नाकर प्रारम्भः ।

श्रीगणेशाय नमः ॥ शतचंनऽउवाच ॥ श्रीमन्महेशविभवेवृषभध्वजाय ध्वस्तांधकायमकरध्वजनाशकांय दंभापहायगरुडध्वजपूजिताय भालेक्षणाय भगवन्सततन्नमस्ते ॥ १ ॥ पाशापहाय

पशुपाशविमोचकाय पञ्चाननायपरमा
द्भुतविक्रमाय पारायपालितसुरासुरमा
नवाय भालेक्षणायभगवन्सततन्नमस्ते
॥ २ ॥ मायापहायमकरन्दरसाकराय मा
नप्रदायमधुरायमहेश्वराय ॥ मानात्तिगा
यमदमोहविवर्ज्जितायभाले० ॥ ३ ॥ मु
क्तिप्रदायमुनिमानसमन्दिराय मुक्ताकला
पकलितामलकुंतलाय ॥ मग्धाननामदि
तायमकुंदहायभाले० ॥ ४ ॥ सर्वोत्तमा
यसकलायसमाश्रयाय सर्गस्थितिप्रलय
कारणकारणाय ॥ सत्यप्रियायसरसायसु
मङ्गलायभाले० ॥ ५ ॥ भद्रायभव्यवि
भवायभवौषधाय भस्मप्रभासमभिभावि
तभूषणाय ॥ भर्गायभानुशशिवह्निगणप्र

भायभाले० ॥ ६ ॥ भव्यायभव्यमगनेत्र
विदारकाय भाग्यास्पदायभवतापविनाश
काय ॥ भक्ताभिवाञ्छितविचित्रफलप्र
दायभाले० ॥ ७ ॥ भोगीन्द्रभोगमणिरा
जितकंधराय भोगिस्फुरन्मरकतोज्ज्वलकुं
तलाय ॥ भोगीन्दुयोगनिगलन्मकुटप्रभा
यभाले० ॥ ८ ॥ भूताधिपायभुजगामलं
कङ्कणाय भूतिप्रियायभुवनादेभवकारणा
य ॥ भूभूधरप्रभृतिभूतगणोदरायभाले०
॥ ९ ॥ दिव्यायदिव्यचरितायदिगंवराय
दिव्यांबरायदितिजानलशामकाय ॥ दी
नार्तिहायदिननाथनिषेवितायभाले० ॥
॥ १० ॥ सोमायसोमरुचिरांजितशेखराय
सोमाग्निभानुवितताभललोचनाय ॥ सो

पेन्द्रचन्द्रविधिवंदितपादुकायभाले० ॥
॥ ११ ॥ कालान्तकायकमनीयजटाधरा
य कालायकालविजयायकलाधराय ॥ क
ल्याणदायकनकाचलकार्मुकायभाले० ॥
॥ १२ ॥ पुण्यायपुण्यहृदयायपुरातनाय
पूतायपूतजनचिन्तितसत्क्रियाय ॥ पुण्य
प्रियायपुरकाननपावकायभाले० ॥ १३ ॥
विश्वाधिकायविधिविष्णुविदारकाय विबु
धाधिपायविबुधाबुधसर्ज्जकाय ॥ विस्तार
दायविजयायविशोधकायभाले० ॥ १४ ॥
नित्यायनित्यविविधामितविग्रहाय नीति
प्रदायानियतायनित्यसिदाय ॥ नीहारशैल
निलयायनियामकायभाले० ॥ १५ ॥
निर्द्धर्मकायनिगमागमनिश्चिताय निर्णी

तवस्तुनिचयायनिरामयाय ॥ निर्द्धूतपा
तकहित्तायनिरञ्जनायभाले० ॥ १६ ॥
मृत्युञ्जयायमृतिकालविवर्ज्जिताय मृद्व
मरत्नरजताकरवृद्धिदाय ॥ मृल्लिङ्गपू
जकमनोरथपूरकायभाले० ॥ १७ ॥ गा
नप्रियायगतिवृत्तविशारदाय गाथामया
यगजकृत्तिवरच्छदाय ॥ गम्यागमायग
मनादिविवर्ज्जितायभाले० ॥ १८ ॥ दा
न्तायदाननिपुणायदयामयाय दारिद्र्यदुः
खदुरिताद्रिदवानलाय ॥ दानायदानरहि
तायदवप्रियायभाले० ॥ १९ ॥ यज्ञाय
यज्ञपुरुषाययशोमयाय यज्ञादिकर्म्मफल
दाययतिप्रियाय ॥ यज्विप्रियाययजनादि
रताश्रयायभाले० ॥ २० ॥ श्रीविष्णुने

त्रकमलार्चितपादुकाय श्रीसावेताद्रितन
यातनुसंयुताय ॥ श्रीभूरुहारुणनवच्छद
पूजितायभालेक्षणायभगवन्सततंनमस्ते॥
॥ २१ ॥ कश्यपउवाच ॥ इतिस्तुत्वाम
हादेवं तंप्रणम्यशतर्चनः ॥ भूयोरुद्रेणतु
ष्टाव सूक्तैरन्यैश्चशांभवैः ॥ २२ ॥ हरऽ
ॐतत्सदितिश्रीमच्छिवरहस्ये सप्तमांशे
द्वादशाध्यायां तर्गतशतर्चनकृतं शिव
स्तोत्रंसमाप्तम् ॥

## ॥ अथ वैदर्भीकृत शिवस्तोत्र ॥
## प्रारम्भः ।

श्रीगणेशाय नमः ॥ ॐन्नमःशिवाय ॥

वैदर्भ्युवाच ॥ नमोनमः कारणकारणाय नारायणाराधितपादुकाय ॥ नमोनमोभूतिविभूषणाय विश्वेशशंभोभगवन्नमस्ते॥ ॥ १ ॥ नमोनमश्चन्द्रकलाधराय नमोनमोमङ्गलविग्रहाय ॥ नमोनमोनन्तगुणार्णवाय विश्वेशशंभोभगवन्नमस्ते ॥ २ ॥ नमोनमोनङ्गमदापहाय नमोनमोमङ्गलमङ्गलाय ॥ नमोनमोमङ्गलदायकाय विश्वे० ॥ ३ ॥ नमोनमोभक्तवरप्रदाय नमोनमःकेशवपूजिताय ॥ नमोनमः सर्वसुरार्चिताय विश्वे० ॥ ४ ॥ नमोनमः सर्वसुराधिपाय नमोनमःसर्वगणाधिपाय ॥ नमोनमःसर्वजनाधिपाय विश्वे० ॥५॥ नमोनमोनन्तविलोचनाय नमोनमोनन्त

लसत्कराय ॥ नमोनमोनन्तशिरोधराय विश्वे० ॥ ६ ॥ नमोनमोहेमविभूषणायन मोनमःशैलसुतान्विताय ॥ नमोनमोवि ल्वदलप्रियाय विश्वे० ॥ ७ ॥ नमोनमो निर्म्मितपारदाय नमोनमोनिर्म्मितभूधरा य ॥ नमोनमोनिर्म्मितकेशवाय विश्वे० ॥ ॥ ८॥ नमोनमोभानुगणप्रभाय नमोनमः श्चन्द्रगणप्रभाय ॥ नमोनमोवन्हिगणप्र भाय विश्वे० ॥ ९ ॥ नमोनमोमन्मथसू दनाय नमोनमः पद्मजसूदनायः ॥ नमो नमोमाधवसूदनाय विश्वे० ॥ १० ॥ न मोनमस्सर्वविधायकाय नमोनमःसर्ज्जित रक्षकाय ॥ नमोनमःसर्ज्जितनाशकाय वि श्वे० ॥ ११ ॥

विष्णुरुवाच ॥ इतिस्तुत्वामहादेवं वेद
र्भीविनयान्विता ॥ पूजयामासरत्नाद्यैः
सोमंसगणमादरात् ॥ १२ ॥ इतिश्रीशि
वरहस्येसप्तमांसे वेदर्भीकृतं शिवस्तोत्रं
सम्पूर्णम् ॥ ॥ ॥

# अथशिवाष्टकस्तोत्रप्रारम्भः।

श्रीगणेशाय नमः ॥ ॐनमःशिवाय॥
श्रीविश्वनाथमदनांतककालकाल गौरीप.
तेगिरिशचन्द्रकलावतंश ॥ शैलेन्द्रजाहृ
दयपङ्कजराजहंस पाहीतियोवदतितंशि.
वभक्तमाहुः ॥ १ ॥ वीरेश्वरत्रिदशनाय
कचन्द्रमौले लीलातिलोलविकटाघटिता

द्देह॥ सिद्धेश्वरीरमणचंद्रपतेमुहुर्मामृपा
हीतियोवदतितंशिवभक्तमाहुः ॥ २ ॥ भो
सङ्कटारमणशूलकरस्मरारे श्रीशीतला
रमणभोकलशेशशंभो ॥ ज्योतिस्वरूपभ
गवन्मणिकर्णिकेशपाहि० ॥ ३ ॥ पुण्या
विमुक्तपरमेश्वरनंदिकेश श्रीमन्महेश्वर
सुवर्णपिनाकपाणे॥ श्रीकालकूटविषनील
धरार्द्धकंठपाहि० ॥ ४ ॥ उद्धुलनातिरु
चिरांगलसत्त्रिपुण्ड्ररेखाललाटफलकाढ्य
कपर्दकेश ॥ आमर्दकेश्वरमहाघविनाश
केश पा० ॥ ५ ॥ श्रीवृद्धकालवृषभध्व
जकृत्तिवास श्रीलिङ्गलिङ्गनिलयाव्य
यमृत्युमृत्यो ॥ श्रीवक्रतुण्डगणनायकढुं
ढिराज पा० ॥ ६ ॥ केदारनायकसदाशि

वसोमनाथ ज्ञानेशदक्षहरनायकदक्षनाथ ॥ सिद्धेशधर्म्मगणनायकचण्डिकेश पा० ॥ ७ ॥ एतादृशासंततिमर्च्चनीय सुरैरपारैरपिकिन्नराद्यैः ॥ तत्पूजयापूजितएव नून ह्युगौरीसहायस्समयोममाय ॥ ८ ॥ हरोंतत्सदितिश्रीशिवरहस्ये पूर्वार्द्धेनन्दिकेशोक्त शिवाष्टकस्तोत्रं सम्पूर्णम् ॥

# अथ विष्णुकृतशिवस्तोत्र प्रारम्भः ।

श्रीगणेशाय नमः ॥ ॐनमःशिवाय॥ विष्णुरुवाच ॥ अवलेपेनदुर्बुद्धे त्वयादु

भाषितंमहत् ॥ ममापिनाथमाक्षिप्य शि
वंमांयत्प्रशंससि ॥ १ ॥ अत्रमेवचनंव्या
स शृणुमूढयथार्थकम् ॥ यच्छ्रुत्वासर्वभू
तानां शिवएवभवेन्मतिः ॥ २ ॥ यस्या
स्तिशक्तिःसतुवावदीतु कृत्वाञ्जलिंमूद्
र्ध्वकरःपुरोमे ॥ कःपूजितःस्याच्छशिशेख
रेण नाराधितोभूतपतिश्चवाकैः ॥ ३ ॥
किंवानदृष्टंहिपितामहेन मूलोतमाङ्गंम
धुसूदनेन ॥ क्षीरोदमन्थोद्भवकालकूटङ्क
ण्ठधृतंकेनहरंविहाय ॥ ४ ॥ एकेनदग्ध
न्त्रिपुरंहरेण कामोललाटाक्षिहुताशनेन ॥
भिन्नोन्धकः शूलवरेणयेन सदेवएकःकि
लशंभुरीशः ॥ ५ ॥ जलोत्थकल्लोलत
रंगगङ्गा धृताशिवोयेनजटाग्रभागे ॥

पादाम्बुजाङ्गुष्ठनिपीडनेन पपानलङ्का
धिपतिर्विसंज्ञः ॥ ६ ॥ सुरासुराणामपि
यत्समक्षं प्रद्ध्वंसितोदक्षमखःक्षणेन ॥
दक्षः प्रणष्टोक्षयतामवापलेभेवरंशंकरतो
पिचाग्र्यम् ॥ ७ ॥ सर्वस्यपूजार्हमहोत्त
माङ्गं संपूज्यतेलिङ्गवरंहरस्यम् ॥ अने
नपर्याप्तमतीवमूढ प्रभुर्यथेच्छतितत्क
रोति ॥ ८ ॥ ब्रह्मान्त्रलिङ्गेहरिरत्रजा
तः सुरासुराश्चैवमथार्चयन्ति ॥ तथापि
सम्यमविचारयंति कोवासमोस्त्यभ्याधि
कोहरस्य ॥ ६ ॥ नवज्रचक्राङ्कसरोरुहा
ङ्क कंलिङ्गाकिंतपश्यजगद्धगांकं ॥ ह
स्तेप्रबद्धेसतिकङ्कणेन नन्दन्तिमूढाःख
लुदर्पणेन॥१०॥इदम्पवित्रन्तवमोहनाश

नं मयास्तवोयत्कथितंहरस्य विमोक्षणा
यात्मभुजद्वयस्य निश्चेष्टकाष्ठोपलसन्नि
भस्य ॥ ११ ॥ यज्ञकर्ताचदेवेन्द्रो वेदक
र्त्ताप्रजापतिः ॥ अहमेवजगत्कर्त्ता नमक
र्तामहेश्वरः ॥ १२ ॥ नतस्यकारणङ्कि
ञ्चि न्निष्कलस्यपरात्मनः ॥ शिवस्यपू
जतेलिङ्ग सर्वैर्देवासुरैर्नृभिः ॥ १३ ॥
शिवेनपूजितःकोवा वदंतुप्रतिवादिनः ॥
स्वनाम्नाब्रह्मणालिङ्गं मयाकृष्णेश्वरंमु
ने ॥ १४ ॥ सर्वप्येक्षितासिद्ध्यर्थं वारा
णस्यांप्रतिष्ठितं ॥ ॐन्नमोवासुदेवाय शि
वशास्त्रावतारिणे ॥ १५ ॥ शिवलिङ्गा
र्चनव्यग्र चेतसेशिवजन्मने ॥ यथार्थव
चसानेन योमांस्तोतुंसमुद्यतः ॥ १६ ॥

तस्याहंसुलभोव्यास नान्यस्याद्दशतैरपि ॥ तस्मात्तंशरणंयाहि शंकरंपरमेश्वरं ॥ ॥ १७ ॥ सूतउवाच ॥ इत्युक्त्वान्तर्दधेविष्णु र्व्यासोपिभयविह्वलः ॥ सन्त्यज्यतएवदेवा न्ब्रह्मविष्ण्वादिकांस्तथा ॥१२॥ जगामशरणंदेवं सर्वभावेनशंकरं ॥१९॥ इति श्रीमत्स्कान्देकालिकाखण्डे विष्णुकृतंशिवस्तोत्रं सम्पूर्णम् ॥

# अथ मार्कण्डेयकृतशिवस्तोत्र प्रारम्भः ।

श्रीगणेशाय नमः ॥ ओंनमःशिवाय॥

मार्कण्डेयउवाच ॥ रत्नसानुशरासनंरज
ताद्रिशृङ्गनिकेतनंसिञ्जिनीकृतपन्नगेश्वर
मच्युतानलसायकम् ॥ क्षिप्रदग्धपुरत्र
यंत्रिदशालयैरभिवन्दितंचन्द्रशेखरमाश्र
येममकिंकरिष्यतिवैयमः ॥ १ ॥ चन्द्रशे
खरचन्द्रशेखरचन्द्रशेखरपाहिमां ॥ चन्द्र
शेखरचन्द्रशेखरचन्द्रशेखररक्षमाम् ॥ पञ्च
पादपपुष्पगंधपदांबुजद्वयशोभितंभाललो
चनजातपावकदग्धमन्मथविग्रहम् ॥ भ
स्मदिग्धकलेवरं भयनाशनंभवमव्ययंच
न्द्रशेखरमाश्रयेममकिंकरिष्यतिवैयः॥२॥
चन्द्रशेखर० ॥ ३ ॥ चन्द्रशेखर० ॥ ३ ॥
मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं प
ङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहं

॥ देवसिंधुतरङ्गशीकरशक्तिशिरासिजटाध रंचन्द्रशेखरमाश्रयेममकिङ्कारिष्यति वैय मः ॥ चन्द्रशेखर० ॥३॥ चन्द्रशेखर० ॥३॥ कुण्डलीकृतकुण्डलेश्वर कुण्डलंवृषवाहन न्नारदादिमुनीश्वरस्तुति वैभवंभुवनेश्वरम् ॥ अन्धकान्तकमाश्रितामरपादपंश्रमण न्तकश्चन्द्रशेखरमाश्रयेमम किङ्कारिष्यति वैयमः ॥ ४ ॥ चन्द्रशेखर० ॥ ३ ॥ चन्द्र शेखर ॥ ३ ॥ यक्षराजसुखंभगाक्षहरंभु जङ्गविभूषितं शैलराजसुतापरिष्कृचारु वामकलेवरम् ॥ क्ष्वेडनीलगलंपरश्वधधा रिणंमृगधारिणश्चन्द्रशेखरमाश्रयेममकिङ्कारिष्यतिवैयमः ॥ ५ ॥ चन्द्रशेखर० ॥ ॥ ३ ॥ चन्द्रशेखर० ॥ ३ ॥ भेपजंभवरा

गिणामखिलापदामप हारिणन्दक्षयज्ञावि
नाशनंत्रिगुणात्मकांत्रिविलोचनम् ॥ भु
क्तिमुक्तिफलप्रदंसकलाघसङ्घनिबर्हणंच
न्द्रशेखरमाश्रयेममकिङ्करिष्यतिवैयमः॥
॥ चन्द्रशेखर० ॥ ६ ॥ चन्द्रशेखर०॥३॥
भक्तवत्सलमर्चितान्निधि मक्षयंहरिदंबरं
सर्वभूतपतिंपरापरमप्रमेयमनूपमम् ॥ सो
मवारिभहीहुताशन सोमपानिलखाकृति
ञ्चन्द्रशेखरमाश्रयेममाकिङ्करिष्यति वैय
मः ॥ ७ ॥ चन्द्रशेखर० ॥ ३ ॥ चन्द्र
शेखर० ॥ ३ ॥ विश्वसृष्टिविधायिनंपुनर
वपालनतत्परं संहरन्तमथप्रपञ्चमशेष
लोकविनाशनम् ॥ क्रीडयन्तमहर्निशंग
णनाथयूथसमावृतञ्चन्द्रशेखर माश्रयेम

मकिंकरिष्यतिवैयमः ॥ ८ ॥ चन्द्रशेखर
॥ ३ ॥ चन्द्रशेखर ॥ ३ ॥ मृत्युभीतमृ
कण्डुसूनुकृतंस्तवंशिवसन्निधौ यत्रयत्रच
यःपठन्नहितस्यमृत्युभयंभवेत् ॥ पूर्णमा
युररोग्यतामखिलात्थसंपदमां ददाच्चन्द्र
शेखरएवदास्यतियाति मुक्तिमयत्नतः
॥ ६ ॥ हरऽओन्तत्सदिति श्रीमाच्छि
वरहस्येमार्कण्डेयकृतं शिवस्तोत्रं सम्पू
र्णम् ॥ ॥ ॥ ॥ ॥

# अथात्म षट्कस्तोत्र प्रारम्भः ।

श्रीगणेशाय नमः ॥ ॐन्नमःशिवाय

॥ मनोवुध्यहङ्कार चित्तानिनाहन्नच श्रो
त्रजिह्वानचघ्राणनेत्रं ॥ नचव्योमभूमि
र्न्नतेजोनवायुश्चिदानन्दरूपः शिवोहंशि
वोहम् ॥ १ ॥ अहंप्राणवर्गोनपञ्चानि
लामेनतोयन्नमेधातवोनैवकोशः ॥ नवा
कुपाणिपादौनचोपस्थपायुश्चिदानन्द ॥
॥ २ ॥ नमेद्वेषरागौनमेलोभमोहौमदोनै
वमेनैवमात्सर्यभावम् ॥ नधर्म्मोनचार्थो
नकामोनमोक्षश्चिदा० ॥ ३ ॥ नपुण्यन्न
पापन्नसौख्यन्नदुःखन्नमन्त्रोनतीर्थन्नवे
दानयज्ञाः ॥ अहंभोजनन्नैवभोज्ज्यन्नभो
क्ताचिदा० ॥ ४ ॥ नमेमृत्युशङ्कानमेजा
तिभेदःपितानैवमेनैवमातानजन्म ॥ नव
न्धुर्न्नमित्रङ्गुरुर्नैवशिष्यश्चिदा० ॥ ५ ॥

अहन्निर्विकल्पोनिराकाररूपोविभुर्व्याप्य सर्वत्रसर्वेन्द्रियाणाम् ॥ सदामेशमत्वन्न मुक्तिर्न्नबन्धश्चिानन्दरूपःशिवोहंशिवोहं म० ॥ ६ ॥ इतिश्रीमत्परमहंसपरिव्राज काचार्यश्रीमच्छङ्कराचार्य विरचितमात्म षट्कस्तोत्रंसंपूर्णंशुभमस्तु ॥

# अथ सिद्धान्तबिन्दुशिव स्तोत्र प्रारम्भः

ओंनमःशिवाय ॥ नभूमिर्न्नतोयन्नतेजो नवायुर्न्नखन्नेन्द्रियंवानतेषांसमूहः ॥ अ नेकांतिकत्वात्सुषुप्त्येकासिद्धस्तदेकोवशि ष्टःशिवःकेवलोहम् ॥ १ ॥ नवर्णानवर्णा

श्रमाचारधर्म्मा नमेधारणाध्यानयोगा
दयोपि ॥ अनात्माश्रयोहंममाद्ध्यासहा
नात्तदे० ॥ २ ॥ नमातापितावानदेवान
लोकान वेदानयज्ञानतीर्थंब्रुवन्ति ॥ सुषु
प्तौनिरस्तातिशून्यात्मकत्वात्तदे० ॥ ३ ॥
नसांख्यंनशाक्तन्नतत्पञ्चरात्र न्नजैन्यं
मिमासन्नकादेर्म्मतंवा ॥ विशिष्टानुभू
त्याविशुद्धात्मकत्वात्तदे० ॥ ४ ॥ नचोर्द्ध
ध्वंनचाधोनचान्तर्न्नवाह्यन्नमध्यन्नातिर्य
ङ्नपूर्वापरादिक्॥ वियद्व्यापकत्वादखण्डै
करूपस्तदे० ॥५॥ नशुक्लन्नकृष्णन्नरक्त
न्नपीतन्न कुब्जन्नपीनन्नह्रस्वन्नदीर्घम्
॥ अरूपंतथाज्योतिराकारकत्वात्तदे० ॥
॥ ६ ॥ नशास्तानशास्त्रन्नशिष्योनशि

क्षान चत्वन्नचाहन्नचायंप्रपञ्चः ॥ स्व
रूपाववोधोविकल्पासहिष्णुस्तदे० ॥ ७॥
नजाग्रन्नमेस्वप्नकोवासुषुप्ति र्न्नविश्वो
नवातैजसःप्राज्ञकोवा ॥ अविद्यात्मक
त्वात्त्रयाणान्तुरीयस्तदे० ॥ ८ ॥ अपि
व्यापकत्वाधितत्वप्रयोगा त्स्वतःसिद्धभा
वादनन्याश्रयत्वात् ॥ जगत्तुच्छमेतत्स
मस्तन्तदन्यत्तदे० ॥ ९ ॥ नचैकन्तदन्य
द्द्वितीयह्कुतस्स्या न्नवाकेवलत्वन्नचाके
वलत्वम् ॥ नशून्यन्नचाशून्यमद्वैतक
त्वा त्कथंसर्ववेदान्तसिद्धंब्रवीमि ॥ १० ॥
इतिश्री मत्परमहंसपरिव्राजकाचार्य श्री
मच्छङ्कराचार्य्यविरचितं सिद्धान्तविन्दु
नाम शिवस्तोत्रं सम्पूर्णम् ॥

# अथ भस्माष्टक प्रारम्भः।

श्रीगणेशाय नमः ॥ यैर्भस्मनायज्ञभवेनगात्रं सन्धूलितंयैःपुरुषोत्तमैश्च ॥ सर्वाणिपापानिहरन्तनित्य न्देहावसानेल भतेचमोक्षम् ॥ १ ॥ कैलासनाथस्यसदा प्रियोवै योभस्मलेपंप्रकरोतिदेहे ॥ धनैश्चधान्यैःपशुभिःसमृद्धैः प्राप्नोतिचान्तेशिवतुल्यरूपम् ॥ २ ॥ पञ्चाक्षरैर्वैदिकमन्त्रयुक्तै र्योभस्मलेपंप्रकरोतिनित्यम् ॥ तद्दर्शनात्पातकनाशमेति शिवस्वरूपं लभतेमनुष्यः ॥ ३ ॥ रेखात्रयंवैसुललाटपट्टे हृत्कण्ठदेशेचतथोदरेच ॥ बाह्वोःप्रकोष्ठेमणिबन्धकेच पृष्ठेककुद्देखलुब्रह्मर

न्धे ॥ ४ ॥ एतेषुगात्रे षुचभस्मलेपान्न
रोलभेद्देशिवतुल्य रूपम् ॥ ब्रह्माललाटे
हनुमव्यवाहस्कन्दस्यनाभौ चगलेचपूषा
॥ ५ ॥ रुद्राश्चसर्वे खलुवाहुमूलेप्रकूर्प्प
रेद्वादश भास्करश्च ॥ दक्षतथा वैमणिव
न्धदेशे तत्रास्थितिर्वै वसवश्चचाष्टौ ॥ ६ ॥
वामेभुजे तिष्ठतिवामदेव स्तत्कूर्प्परेचैव
प्रभञ्जनश्च ॥ माणिक्यवन्धे शशिनस्थि
तिश्च स्यात्पृष्ठदेशे चहरस्यवासः ॥ ७ ॥
शंभोर्न्निवासं हिककुप्प्रदेशे मूर्द्ध्निप्रदेशे
परमात्मनश्च ॥ योभस्मनावै प्रकरोतिले
पन्तस्यैवदेहे शिवसंस्थितिश्च ॥ ८ ॥
भस्माष्टकंयः पठतेहिनित्यं स्नानेचदाने
शिवपूजनेच ॥ भस्मानुलेपं प्रकरोतिनि

त्वं योवैनरोसि द्विमुपैतिशीघ्रम् ॥ ९ ॥
श्रीपौण्डरीके णचभस्मनोवै माहात्म्यमेत्र
ह्रक थितंपवित्रम् ॥ ललाटपट्टे खलुसर्वदे
हे सन्धारणाद्यो लभतेशिवत्वम् ॥ १० ॥
कथितंभस्ममाहात्म्यंशिवदत्तेनधीमता ॥
यः पठेच्छिवपूजादौसगच्छेच्छिवमन्दिरम्
॥ ११ ॥ इतिश्रीमाच्छिवदत्तपौण्डरीककृतं
भस्माष्टकंसमाप्तंशुभमस्तु ॥

## अथ गायत्र्युपासना प्रारम्भः

श्रीगणेशाय नमः ॥ गायत्र्युवाच ॥
नमोनमस्तेस्तुमहेशतुभ्यन्नमोनमस्तेवृप

भध्वजाय ॥ नमोनमस्तेगिरिजाधवाय
विद्यास्वरूपायनमोनमस्ते ॥ १ ॥ नमो
नमस्तेपरमात्मनेनमः स्वर्गापवर्गप्रदभ
र्गशंभो ॥ भवत्पदांभोजविलोकनेनसुखां
बुधिर्मर्त्यनुवृत्तिमाप ॥ २ ॥ आपत्कुलंन
ष्टमनन्तमीशत्वत्पादपद्मार्पितचित्तवृत्तेः ॥
शुभास्पदत्वंसमवाप्यशंभो प्रसन्नचित्तो
पिभवेन्नरोपि ॥ ३ ॥ अणोरणीयान्महृ
तोमहीयानात्मागुहाया न्निहितोस्यज
न्तोः ॥ तमक्रतुंपश्यतिवीतशोकोधातुःप्र
सादान्महिमानमीशम् ॥ ४ ॥ उमासहा
यंपरमेश्वरंप्रभुं त्रिलोचनन्नीलकण्ठंप्रशा
न्तम् ॥ ध्यात्वामुनिर्गच्छतिभूतयोनिंस
मस्तसाक्षात्तमसःपरस्तात् ॥ ५ ॥ अव्य

रूपंपरमात्मतत्वं नवेदवेदान्तपरिश्रमो
पि ॥ ज्ञेयंपरन्त्वीश्वरपादपद्मप्रसादविन्ने
यमतिप्रभामे ॥ ६ ॥ नयत्स्वरूपन्तववे
ददृष्टन्नदृष्टमीशानसुरैरपीदम् ॥ मायाप
रंभाग्यवशेनदृष्टंभाग्यस्यकोवा भगवन्नि
यंता ॥ ७ ॥ यत्पादपद्मस्मरणप्रवृत्ताः कृ
तान्तवार्त्तामपिदुस्सहान्तां ॥ विहायचा
नन्दजलाब्धिमग्नाः संसारतापैर्नचपीडि
ताःस्युः ॥ ८ ॥ महेश्वरश्रीचरणारविन्द
न्निधायचित्ताम्बुजकर्णिकायाम् ॥ आनन्द
धाराद्रतसच्छरीराः सुरानपश्यन्तिनरान
धीराः ॥ ९ ॥ यदीक्षणंवाशिवपादपद्मंह
त्पद्मसंविष्टमतिप्रकृष्टम् ॥ प्रकृष्टएवा
तिनिकृष्टजन्मा प्युत्कृष्टजन्मासतुकिंपुनः

स्यात् ॥ १० ॥ स्वर्गापवर्गप्रदमीश्वर
न्त्वांभजन्तिधन्याः परमप्रमेयम् ॥ त्विना
बिमुक्ताद्यपरंपरास्ते समस्तलोकेषुकिला
स्तिकारते ॥ ११ ॥ अनन्तकल्याणपरंप
रासुतिष्ठान्तितेशङ्करपुजकास्ते ॥ नाथ
त्प्रपश्यन्तिकदापि धीराधीरास्तएवेतिबि
चारिताश्च ॥ १२ ॥ मयिप्रसादोपिकृत
स्त्वयायन्त्वत्पादसन्दर्शनदानरूपः ॥ आ
नन्दकन्दोयमनुक्षणम्मे सूतेमहानन्दनिधा
नमीशः ॥ १३ ॥ कारुण्यपूर्णाबुधिमीश्व
रत्वां स्मृत्वापिसंतापमहाब्धिपूर्णः॥दृष्ट्
भवंतभगवन्तमीशङ्को वानतृप्तस्तरसा
सुखेन ॥ १४ ॥ अनुक्षणन्तस्यसुखानि
शंभोसुखानिसम्पज्जलराशयोपि ॥ यस्या

नपायात्वयिभक्तिरीश सातावदत्यन्तसुदु
र्लभान ॥ १५ ॥ येनाप्रमादेनकृतोऽस्तिध
र्मोमहेशपादार्चनरूपएव ॥ तस्यैवतद्भक्ति
शुभप्रवाहःसुदुर्लभःकिन्नसतामपीश ॥
॥ १६ ॥ शंभोयथाभर्गवदप्रवेशोमन्त्रेम
दीयेचतथाप्रसादः ॥ भवत्वयंमेभगवन्वरो
स्यवरत्वमित्येवमतिर्ममास्तु ॥ १७ ॥
व्यासउवाच ॥ इत्युक्तन्तद्वचः श्रुत्वातथा
स्त्वितिमहेश्वरः ॥ गायत्रीपूजितलिङ्गे
प्रविष्टोगणसंवृतः ॥ १८ ॥ गायत्रीपू
जितंलिङ्गंयःपूजयतिसादरम् ॥ सर्वसि
द्धिसुसंपन्नः सिद्धेषुप्रथितोभवेत् ॥१९॥
तदाप्रभृतिगायत्रीजपयोग्यामुनीश्वराः ॥
स्वर्गापवर्गदातृत्वात्भर्गोभर्गत्वमागतः ॥

॥ २० ॥ योगायत्रीस्तवंपुण्यंमहेशज्ञानपू
र्वकम् ॥ पठेज्जपफलंप्राप्यसिद्धमन्त्रोभ
विष्यति ॥ २१ ॥ इतिश्रीशिवरहस्येतृ
तीयांशेव्यासमुनिसंवादे गायत्र्युपासना
यान्द्वितीयोध्यायः ॥ ॥ ॥ ॥ ॥

# अथाऽपराधभंजनस्तोत्र प्रारम्भः

श्रीगणेशायनमः ॥ ॐ ॥ शान्तं
पद्मासनस्थंशशिधरमुकुटं पञ्चवक्त्रांत्रिने
त्रंशूलंवज्रञ्चखड्गं परशुमभयदन्दक्षि
णाङ्गेवहन्तम् ॥ नागंपाशञ्चघण्टाण्ड

मरुकसहितंसांकुशंवामभागे नानालङ्का
रदीप्तंस्फटिकमणिनिभंपार्बतीशन्नमामि
॥ १ ॥ वन्देदेवमुमापतिंसुरगुरुंवन्देजग
त्कारणंवन्देपन्नगभूषणंमृगधरं वन्देपशू
नांपतिम् ॥ वन्देसूर्यशशाङ्कवह्निनयनंव
न्देमुकुन्दप्रियं वन्देभक्तजनाश्रयञ्चवरदं
वन्देशिवंशङ्करम् ॥ २ ॥ आदौकर्मप्र
सङ्गात्कलयतिकलुषंमातृकुक्षौस्थितः स
न्विण्मूत्रंमेध्यमध्ये व्यथयतिनितराञ्जा
ठरोजातवेदाः ॥ यद्यद्वात्रदुः खंव्य
थयतिविषमं शक्यतेकेनवक्तुं क्षन्तव्योमे
पराधः शिवशिवशिवभो श्रीमहादेवशं
भो ॥ ३ ॥ बाल्येदुःखातिरेकोमललुलि
तवपुस्त न्यपानेपिपासानोशक्य श्चे

न्द्रियेभ्योभवगुणजानिता जन्तवोमान्तु
दन्ति ॥ नानारोगोत्थदुःखादुदरपरिवशः
शङ्करंनस्मरामि क्षन्तव्योमे॰ ॥ ४ ॥
प्रौढोऽहंयौवनस्थोविषयविषधरैः पञ्च
भिर्म्मर्म्मसन्धौ दृष्टोनष्टोविवेकः सुतधन
युवती स्वादुसौख्येनिषण्णः ॥ शैवेचि
न्ताविहीनंममहृदयमहो मानगर्वाधिरूढं
क्षन्तव्योमे॰ ॥ ५ ॥ वार्द्धक्येचेन्द्रियाणां
विगतगतनतै राधिदैवादितापैः पापैरोगै
र्वियोगैरसुदृशवपुषं प्रौढहीनञ्चदीनम् ॥
मिथ्यामोहाभिलाषे भ्रमतिममनो धूर्ज्ज
टेध्यानशून्यं क्षन्तव्योमे॰ ॥ ६ ॥ नोश
क्यंस्मार्तकर्मप्रतिपदगहनं म्प्रत्यवाया
कुलाख्यं श्रौतेवार्ताकथंमेद्विजकुलविहि

ते ब्रह्ममार्गेचसारे ॥ नष्टोधर्म्मोविचारः
श्रवणमननयोः कोनिदिध्यासितव्यः क्ष
न्तव्योमे० ॥ ७ ॥ स्नात्वाप्रत्यूषकालेस्न
पनविधिविधौ नाहृतङ्गाङ्गतोयं पूजार्थंवा
कदाचिद् बहुतरुगहनात्खण्डविल्वैकप
त्रम् ॥ नानीतापद्ममालासरसिविकासि
ता गन्धपुष्पेत्वदर्थं क्षन्तव्यो० ॥ ८ ॥
दुग्धैर्मध्वाज्ययुक्तैर्घटशतसहितैः स्नापि
तन्नैवलिङ्गंनोलिप्तञ्चन्दनाद्यैः कन
कविरचितैः पूजितंनप्रसूनैः ॥ धूपैः क
र्पूरदीपैर्विविधरसयुतै र्न्नैवभक्ष्योपहारैः
क्षन्तव्योमे० ॥ ९ ॥ नग्नोनिः सङ्गशु
द्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो
नासाग्रेन्यस्तदृष्टिर्विरहभवगुणे र्न्नैवद्

ष्टङ्कदाचित् ॥ उन्मत्तावस्थयात्वांविग
तकलिमलं शङ्करंनस्मरामि क्षन्तव्यो
मे० ॥ १० ॥ ध्यानञ्चित्तेशिवाख्यंप्रचुर
तरधनं नैवदत्तन्द्विजेभ्यो हव्यन्तेलक्ष
संख्यंहुतवहवदने नार्प्पितंबीजमन्त्रैः ॥
नोजप्तङ्गाङ्गतीरेव्रतपरिचरणे रुद्रज
प्यैर्नवेदैः क्षन्तव्योमे० ॥ ११ ॥ स्थि
त्वास्थानेसरोजेप्रणवमयमरुत् कुंभकेसु
क्ष्ममार्गे शान्तेस्वान्तेप्रलीनेप्रकटितगह
ने ज्योतिरूपेपराख्ये ॥ लिङ्गन्तद्ब्रह्मवा
च्यंसकलमभिमतं नैवदृष्टङ्कदाचित्
क्षन्तव्योमे० ॥ १२ ॥ आयुर्नश्यतिप
श्यतांप्रतिदिनं यातिक्षयंयौवनं प्रत्याया
न्तिगताःपुनर्न्नदिवसाः कालोजगद्भक्षकः

॥ लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्यु
च्चलञ्जीवन न्तस्मान्माशरणागतंशरण
दत्वं रक्षरक्षाधुना ॥ १३ ॥ चन्द्रोद्भासि
तशेखरेस्मरहरे गङ्गाधरेशंकरे सर्प्पैर्भू
षितकण्ठकर्ण्णविवरे नेत्रोत्थवैश्वानरे द
न्तित्वक्कृतसुन्दरांबरधरे त्रैलोक्यसारेह
रे मोक्षार्थङ्कुरुचित्तवृत्तिममला मन्यैस्तु
किङ्कर्मभिः ॥ १४ ॥ किन्दानेनधनेन
वाजिकरिभिः प्राप्तेनराज्येनाकिं किंवापु
त्रकलत्रमित्रपशुभि र्देहेनगेहेनाकिम् ॥ ज्ञा
त्वैतत्क्षणभङ्गुरंसपदिरे त्याज्यंमनोदूर
तः स्वात्मार्थङ्गुरुवाक्यतोभजभज श्री
पार्वतीवल्लभम् ॥ १५ ॥ करचरणकृतं
वाकायजंकर्मजंवाश्रवणनयनजंवा मान

संवापराधम् ॥ विदितमविदितंवासर्वमेत
त्क्षमस्व जयजयकरुणाब्धे श्रीमहादेवशं
भो ॥ १६ ॥ गात्रंभस्मसितंसितञ्चह
सितं हस्तेकपालंसितं खट्वाङ्गञ्चासि
तंसितश्चवृषभः कर्णौसितेकुण्डले ॥ ग
ङ्गाफेनसितञ्जटापयसित ञ्चन्द्रःसितो
मूर्द्धनि सोयंसर्वसितोददातुविभवं पापक्ष
यश्शङ्करः ॥ १७ ॥ इतिश्री मत्परमहं
सपरिव्राजकाचार्य्य श्रीशंकराचार्य्यभग
वत्कृतम पराधभंजनस्तोत्रं सम्पूर्णम् ॥

# अथ श्रीरामपञ्चदशी स्तोत्र प्रारम्भः

ॐ ॥ शान्तिन्दान्तिमुदारताञ्च दधतः प्राणोर्द्ध्वरोधक्षमास्त्यक्तभ्रातृकलत्रपुत्रसुहृदो भस्माङ्गरागोज्ज्वलाः॥ भूभृत्कन्दरकेतनास्सुमतयो यस्मिन्नमन्तेमुदा विश्वस्मिन्नमतेचयोहृदिसमे रामस्समुद्भासताम् ॥ १ ॥ श्रीमन्नामभवोग्रभीतिविलसत्सद्भावभङ्गोद्धुर प्रोद्यद्भान्तिभराभिभावनरत स्वेपाञ्जनानाम्भृशम्॥ त्वम्भर्त्ताऽसिमहानुभावभजता म्भुक्तिप्रदोमुक्तिदो भूयात्संसृतिहारिणीममहृदि त्वद्भक्तिरेवा

निशम्र ॥ २ ॥ क्रव्यादाधिपतेरुपद्रवरते
विख्याततेजस्ततेः कैलाशाचलचालक
स्याविबुध ग्रामाभिमानच्छिदः ॥ मायोग्र
स्यदशाननस्यकुधिय स्त्वंयान्दशांसंव्य
धा मन्मोहोद्धतरक्षसः कुरुदशां श्रीरामतां
सत्वरम् ॥ ३ ॥ रामोमाऽवतुनौमिराममन
निशं रामेणविश्वन्ततं रामायार्पितमस्तु
सर्वमपिमे रामाद्गतिर्लभ्यते ॥ रामस्यैव
भवानिकिङ्करतरो रामेऽस्तुभक्तिर्म्मम
श्रीदोमेभवरामधामपरम म्भासीहमेसम्प
दाम् ॥ ५ ॥ श्रीमान्दाशरथिर्मुनेोष्टिशर
ण ङ्कोदण्डभङ्गोद्यशाः प्राप्तोर्वीतनयो
नृपान्तकजयी तातास्यनुज्ञाकरः ॥ सीता
लक्ष्मणसेवितोवनगतो रक्षोहृतप्रेयसी सु

श्रीवामरभूमिजाधिभर हृत्साकेतराट्पातु नः ॥ ५ ॥ मञ्जीरादिविभूषिताङ्घ्रियुगलं सत्पीतपट्टाम्बर ञ्चञ्चत्काञ्चनमेखलाञ्चितकटिं संशोभिमुक्तास्रजम् ॥ सौवर्णाङ्गदकङ्कणादिकधरं शङ्खोल्लसत्कन्धरं नासामौक्तिकशालिनंसुमुकुटं रामङ्घनाभम्भजे ॥ ६ ॥ वज्राम्भोजयवादिलाञ्छनभृतं लावण्यसारावधिं शोणाम्भोजतलङ्क्षमादलनिभं रोचिष्णुगुल्फद्वयम् ॥ उज्जाग्रन्नखपद्मरागकिरण म्पञ्चास्यकूर्म्मोपमं सन्मञ्जीरवरोर्म्मिकंशिवकरं श्रीरामपादम्भजे ॥ ७ ॥ श्रीरामोविधिवासवादिदिविष दृन्दोत्तमाङ्गोल्लस द्वेलद्दिव्यमणिस्फुरत्सुमुकुट स्पृष्टाङ्घ्रिपद्मप

यः ॥ रम्यानन्तविशालवैभवभरो भक्तैक
रक्षापरो मायामर्त्यतनुस्त्रयीपरिगुतो म
न्मानसेवर्त्तताम् ॥ ८ ॥ श्रीरामंसुरसङ्घ
सेवितपदं सङ्कल्पकल्पद्रुम म्भक्त्यानि
र्म्मलयाविशुद्धहृदय स्संसेवतेयःकृती॥
उच्चैस्सैरिभवाहनस्यसुतरां स्थूलोग्रदंष्ट्रा
धृतो गाढध्वान्तरुचेर्य्यमस्यसभवे त्कि
ञ्जातुनैवातिथिः ॥ ६ ॥ श्रीरामेणचरा
चरात्मकमिदं शक्त्यासमुत्पाद्यते तत्स
म्पादितकर्म्मराशिवशत स्सम्पाल्यतेच
ध्रुवम् ॥ सानन्दञ्चयथावकाशमखिलं सं
स्थाप्यतेस्वोदरे तत्तत्कार्य्यवशादनेकत
नुना भक्तीकृतस्स्यामहम् ॥ १० ॥ श्री
रामायनमोऽस्तुमेकथमपि क्वापीतियः क

श्रन स्वान्तेवावहिरेवचामकृदपि प्रोच्चार
यत्यञ्जसा ॥ नानाजन्मभिरर्ज्जिताघनि
करा न्मुक्तोविमुक्तीश्वरो दुष्प्रापन्तपसाप
रैश्चनियसै द्धामव्रजत्येवमः ॥ ११ ॥
श्रीरामादधिकोऽत्रकोऽस्तिभुवने कारुण्य
पाथोनिधि धैर्य्यस्थैर्य्यगभीरतासुजनता
सौशील्पशौर्य्यादिभृत् ॥ ब्रह्मण्यश्चयशो
धनस्सहृदयो मान्योवदान्योत्तमो नीति
ज्ञोगुरुवत्सलोजितमना वन्दारुचिन्ताम
णिः ॥ १२ ॥ श्रीरामस्यकृपाकटाक्षमिह
य स्मञ्जातभाग्योदय स्सम्प्राप्नोतिश
चीपतिप्रभृतयो वाञ्छन्तितस्यैवतम् ॥
अष्टौवानवसिद्धयश्चनिधय स्संयान्तित
द्दासतां लोकानाञ्जनिरक्षणक्षयविधो श

क्तोभवत्येवसः ॥ १३ ॥ श्रीरामेत्रिदशो
त्तमेधृतशमे विज्ञानदानक्षमे त्रैगुण्योपर
मेवशीकृतरमे नित्यस्फुरत्संयमे ॥ सर्वाप
द्विगमेऽभिधायिनिगमे हृष्यत्क्षमेसत्क्षमे
रक्षोवंशदमेमनोहरतमे सप्रीतिचेतोऽस्तु
मे ॥ १४ ॥ श्रीरामत्वमसिप्रभुर्म्ममगुरु
र्म्मातापितावान्धवो दातायोजयितावप
द्वमयिता विष्णुर्विरञ्चिर्हरः ॥ भूरापोमरु
दग्निरम्बरमपि त्वंशीतरश्मीरवि स्स्थूलं
सूक्ष्ममिदन्त्वमेवसकलं सर्वात्मनेतेनमः ॥
॥ १५ ॥ रघुपतिनुतिमित्युदारबुद्धीरघुप
तिपादसमर्च्चनाप्तशुद्धिः ॥ रघुपतिरत
येजनः पठेद्योरघुपतिधामनुतस्सुरैस्सग
च्छेत् ॥ १६ ॥ इतिश्री मत्कौशल्यगोत्रो

दवल्लक्ष्मीनारायणाख्यकविवराविरचितंश्री रामपञ्चदशीस्तोत्रं सम्पूर्णम् ॥

# अथ रामषट्पदीस्तोत्र प्रारम्भः ॥

ॐ ॥ सश्रीकान्यःकुरुतेधनलवहीनान पिक्षणान्मनुजान् ॥ सुरनरनुतपदकमलं हृदिनिदधेतम्मुदारामम् ॥ १ ॥ लघुता स्पदमिहकथमपिनभवति मनुजस्समर्च्य यंरागात् ॥ दीनावनैकहृदयंहृदि० ॥ २ ॥ मथनेनराक्षसानांविपुलितविमला तुलैक कीर्तिर्यः ॥ सुप्रार्थितंश्रुतिनिकरैर्हृदि० ॥

॥ ३ ॥ संसाराम्बुधिमामितन्तं त्वुंम्भक्तैरु
पास्यतेखलुयः ॥ मोदात्मनमुदारंहृदि०
॥ ४ ॥ कृपयामसृणमनायो गणयतिमन्तू
न्नजातुभक्तानाम् ॥ विनयैकमोदमानंहृ
दि० ॥ ५ ॥ श्यादोदारश्रीश्रितकायलतं
यम्भजन्तिकिलसन्तः ॥ वस्तुदुरापमुपै
तुंहृदि० ॥ ६ ॥ श्रीलक्ष्मीनारायणनिर्म्मि
तदेहेतिषट्पदीरुचिरा ॥ श्रीरघुपतिपद
कमले विलसतुनितराम्प्रमोदेन ॥ ७ ॥
इतिश्री मत्कौशल्य०श्रीरामषट्पदीस्तोत्रं
सम्पूर्णम् ॥ ॥ ॥

॥ ❋ ॥ ❋ ॥

# अथ श्रीकृष्णाष्टकस्तोत्र प्रारम्भः ।

ॐ ॥ यशोदापुण्यानांनिरवधिफलम्भ
क्तवशगोनिराकारो पारोनिखिलजगतामे
कवसतिः ॥ सदाशुद्धोबुद्धोजनिमृतिविही
नो जविभवः शरण्योलोकेशोममभवतुकृ
ष्णो क्षिविषयः ॥ १ ॥ नवाम्भोभृत्का
न्तिङ्कलितवनमालांसुमुकुटा न्दरश्री
वान्दिव्यैः कनककटकाद्यैस्सुरुचिराम् ॥
मनोभूनिर्व्रीडकपट शिशुमूर्तिन्दधदसो
शरण्यालोकेशोममभवतु॰ ॥ २ ॥ विरि
ञ्चिर्यैस्तोतुंश्रुतिपरिमितैरेववदनैर्न सेना

नीःषड्भिस्त्रिपुरमथनःपञ्चभिरपि ॥ नचे
शोनागेशश्शतदशकमानैस्सुमहिमा शर
ण्योलोकेशो० ॥ ३ ॥ विधिर्भूत्वाविश्वं
स्थिरचरमयंयोऽभिसृजतिप्रभुर्विष्णुर्भूत्वा
तदवतिचयस्साधुविधिवत् ॥ महारुद्रोभू
त्वाहरतितदशेषंमरुचियश्शरण्यो० ॥ ४ ॥
किरीटंसौवर्णंविविधरुचिरत्नौघरुचिरं सह
स्त्रार्कच्छायन्त्रिदिवतरुसन्माल्यसुभगम् ॥
शिरस्याधत्तेयोललितबनमालाञ्चितवपु
श्शरण्यो० ॥ ५ ॥ महापापन्तापञ्जठरभ
वमत्यन्तगहनंव्यथाश्चोग्रास्सर्वाः कथयि
तुमशक्याअपिकथम् ॥ यदाख्याव्याहा
रोहरतिदिशतिस्वास्थ्यमधिकंशरण्यो० ॥
॥ ६ ॥ तटेश्रीकालिन्द्यामणिशकलसोपा

नसुभगेद्रुमैस्सान्द्रच्छायैः परमरमणीयाव
नितले ॥ कदम्बस्थस्स्त्रीणांवसनचयमा
दायमुदितश्शरण्यो० ॥ ७ ॥ दधानंसद्द
र्शीयुवतिहृदयाकर्षिनिनदांनवाम्भोदच्छा
यंसुदृशमिहधृत्वामनसियम् ॥ लभन्तेश
क्राद्यैरपिपदमलभ्यंननुजनाश्शरण्यो० ॥
॥ ८ ॥ लक्ष्मीनरायणाख्येनकविनेदंवि
निर्म्मितम् ॥ श्रीकृष्णाष्टकमुच्चार्य्यकल्या
णंयान्तुमानवाः ॥ ९ ॥ इतिश्रीमत्कौश
ल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयकविवर
विरचितंश्रीकृष्णाष्टकस्तोत्रंसम्पूर्णम् ॥

# अथ श्रीकृष्णाऽष्टकस्तोत्र प्रारम्भः ।

ॐ ॥ चिदानन्दाकारंसकलजगदानन्द
नपरंलसल्लीलाधारं निजजनभवाभात्रक
हरम् ॥ स्फुरन्नानाकारन्दनुजदमनायायु
धकरंस्वभक्तेच्छाचारं यदुवरनुमस्त्वाद्रगि
रिधरम् ॥ १ ॥ कदम्बच्छायस्थंसजलज
लदच्छायमनघंलसाद्दिव्यद्रस्त्रं मणिमुकुटके
यूररुचिरम् ॥ मुदाराधाश्लिष्टङ्कलमपि
चवंश्याविदधतम्भवन्तं श्रीकृष्णप्रणतम
मरैर्न्नौमिनितराम् ॥ २ ॥ मनोमेश्रीकृ
ष्णत्वयिभवतुसक्तंयदुपतेसदासर्वत्रत्वांम

मदृगिहपश्यत्वविरतम् ॥ श्रुतीमेत्त्वत्की
र्त्तिश्रवणरसलुब्धेच भवताङ्करौत्वत्सेवा
याम्पदयुगमयित्वत्पदगतौ ॥ ३ ॥ भव
त्पादाम्भोजंहृदिदधतिये केशवजनाव्रज
न्तिस्वच्छन्दङ्किमुनपरमन्धामभवतः ॥
महाराजंराज्ञांमुकुटमणिसंलालितपदंसुस
न्तुष्टङ्कृत्वाव्यसनमिहकेयान्तिवशमे॥४॥
विरिञ्चिः श्रीकृष्णत्वमिहजननायासिज
गतांयशोदासूनोत्वम्भवसि चहरीरक्षण
विधौ ॥ अहोगोपालेन्द्र त्वमसिखलुरुद्रो
लयकृते त्वदन्यःकोलोके विविधविलस
न्नाट्यकुशलः ॥ ५ ॥ भवन्तंश्रीमन्तम्प
रमपुरुषंनिर्गुणमजं श्रुतिग्रामोद्गीतङ्क
थमपिसुयोगैरवगतम् ॥ महान्तङ्काला

न्तं विगतपरिणामंसुखमयं विचित्रेहृत्कृ
ष्ण कृत्नशिशुमहञ्चेतासिदधे ॥ ६ ॥
त्वमग्निस्त्वंव्योम त्वमसिरविरिन्दुस्त्वम
घनिस्त्वमेवाम्भः कृष्णत्वमसिपवमानश्च
भगणः ॥ विधिर्विष्णूरुद्रोमनुरपिसुरेन्द्र
श्चवरुणो धनाध्यक्षोदक्षोभुजगपतिरुग्रा
वचमपि ॥ ७ ॥ पितात्वंश्रीकृष्णत्वमसि
जननीवन्धुरपिचत्वमे वासिभ्रातासहचर
गणोऽपिचत्वमसिमे ॥ सुहृत्वंमेराजात्वम
सिकुलदेवोममगुरु र्गतिश्शुद्धिर्बुद्धिस्त्व
मसिममसर्वंयदुपते ॥ ८ ॥ स्तुतिरितिभ
वतुत्वदीयचेतो गुरुरुचयेश्रुतिवेद्यकृष्णदे
व ॥ अतिरुचिरकृपा र्द्रदृष्टिपातैःकुरुमम
मानसमात्मभावपूर्णाम् ॥ ६ ॥ इतिश्री

मत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयक विवराविरचितं श्रीकृष्णाष्टकस्तोत्रं स म्पूर्णम् ॥

# अथ गोविन्ददशकस्तोत्र प्रारम्भः ॥

ॐ ॥ सश्रीकानिहकुरुतेय त्पदपङ्क जसमर्च्चनंमनुजान् ॥ हृदिनिदधेतमवि रतम्परमानन्दायगोविन्दम् ॥ १ ॥ योगो वर्द्धनगिरिभृत्समजनि भक्तार्त्तिभारभङ्ग कृते ॥ हृदिनिदधे० ॥ २ ॥ रविशशिशि खिमघवमुखायदपाङ्गोल्लास दर्शिनोऽ जस्रम् ॥ हृदिनिदधे० ॥ ३ ॥ मन्दारमा

ऽप्येतिशिवंयदपचितिं साधुसादरङ्कृत्वा हृदि० ॥ ४ ॥ आचारविहीनाअपिगतिम ह्नगन्तिप्रभोर्नुतेर्य्यस्य ॥ हृदि० ॥ ५ ॥ स्वारीनभिभवतिनरो नामस्मरणाज्जगद् गुरोर्य्यस्य ॥ हृदि० ॥ ६ ॥ दिविभुविपा तालेऽपिस्फुरति यदीयस्समुल्लसन्महि मा ॥ हृदि० ॥ ७ ॥ अजरामरतामयते यस्मिन्भावंविधायपतितोऽपि ॥ हृदि ॥ ॥ ८ ॥ अयभरतस्सुकृतिवरै र्य्यस्यविभो शप्यतेपरामक्तिः ॥ हृदि० ॥ ९ ॥ एतेच राश्वराअपियेस्मि न्नन्तेप्रयान्तिसुस्थिर ताम् ॥ हृदि० ॥ १० ॥ लक्ष्मीनारायण कविनिर्म्मितमे तन्मनोहन्दशकम् ॥ शृ ण्वन्पठन्मनुष्यो गच्छतुगोविन्दसायुज्य

म् ॥ ११ ॥ इतिश्री मत्कौशल्यगोत्रोद्भ
वलक्ष्मीनारायणाह्वयकविवरविरचितं श्री
गोविन्ददशकस्तोत्रं सम्पूर्णम् ॥

# अथ श्रीगोपालाष्टकस्तोत्र प्रारम्भः ।

ॐ ॥ जगद्धातायोयम्भजतिचजगद्ये
नचततं समंयस्मैदेवाविदधतिनमोऽभ्युद्य
तइदम् ॥ विपदभिद्यस्याच्चार्व्रजतिविल
यंयत्रनिखिल म्भजेश्रीगोपालं श्रुतिवि
दिततत्त्वन्तमनिशम् ॥ १ ॥ क्षितेर्दुर्दै
प्पांञ्चत् क्षितिपतिभराक्रान्तवपुष स्स्फु
रद्गोरूपाया निजपदगतायाःकृतनुतेः ॥

विस्मृत्यक्लेशंयस्सतियदुकुलेऽ वाऽ तरदहो भजेश्रीगो० ॥ २ ॥ यशोदानन्दाभ्याङ्कृ तगुरुतपोभ्यांवितरितुंयशः प्रादुर्भूतंव्रज भुविकृतानेकचरितम् ॥ घृतङ्गोपीवृन्दे र मरनिकरस्समश्रयतियम्भजेश्रीगो० ॥ ॥ ३ ॥ अमाथिप्रख्यातो विषधरवरःका लियइति स्वरक्षिस्वाराजात् क्षितिधरम धोऽधोनिजजनः ॥ बकाद्याचास्सर्पादपि शिशुगणोयेनविधिव द्भजेश्रीगो० ॥ ४ ॥ अनन्तब्रह्माण्डप्रभवपुषेऽ नन्तजनुषेसदे काऽनाद्यन्तस्थिराचिदजरूपायविभवे ॥ प तीन्पुत्रान्यस्मैव्रजमृगदृशोमङ्क्षुविजहुर्भ जेश्रीगो० ॥ ५ ॥ यतोऽक्रूरानीतास्पदम गमदुच्चै स्सरजकस्सुखङ्कुब्जाभङ्गन्धनुरि

भवरःप्राणविगमम् ॥ समल्लौघःकंसोग
तिमृषिभिराकाङ्क्षिततराम्भजेश्रीगो० ॥
॥ ६ ॥ सुकारुण्याम्भोधेस्त्रिभुवनगुरोस्स्व
च्छयशसः प्रतापाग्नौयस्याक्षितिपशलभा
स्सन्निरपतन् ॥ सुदिष्टेश्चात्युच्चैर्नृपवर
सुतारूपजलधौभजेश्रीगो० ॥ ७ ॥ जग
द्यासेयस्मिन्कुरुयदुकुलोत्था नरवरानरेन्द्रा
श्चान्येऽपिस्त्वरितमतिविश्रान्तिमगमन् ॥
श्रितात्मत्वङ्कृत्वाझटितिहृतभारां वसुम
तीम्भजेश्रीगो० ॥ ८ ॥ श्रीगोपालवरा
ष्टकस्तवमिमंसन्ध्यात्रये भक्तितश्शुद्धात्मा
श्शृणुतेपठत्यपिचयस्स्वायत्तचित्तोजनः ॥
लब्ध्वा ऽसौविपुलन्धनङ्गुरुयशश्शारीरम
ग्र्यंशिवंसद्विद्यामभिलाषसिद्धिमतुलांनु

त्तिंव्रजत्यञ्जसा ॥८॥ इतिश्रीमत्कौशल्य
गोत्रोद्भवलक्ष्मीनारायणाह्वयकविवरविर
चितंश्रीगोपालाष्टकस्तवस्सम्पूर्णः ॥ ॥

# अथ श्रीश्रीनाथाऽष्टकस्तव प्रारम्भः ।

यस्सर्वेषांनियन्ता भजतिभवहरम्भाव
तो यम्भवार्त्तोव्याप्यैतद्येनयस्मैममसकल
मिदञ्जातमेतच्चयस्मात् ॥ एतेयस्यांश
भूताविधिमघवमुखालीयते यत्रसर्वेश्रीना
थोऽव्यात्सदुःखाङ्कभयभरजात्स्वाङ्घ्रि
पद्माश्रयंमाम् ॥ १ ॥ योगक्षेमावहोय
स्स्वनिरतमनसांमानवानामजस्रंसर्वान्त

यंमिभावन्दधदतिकृपया पातिविश्वंसम
न्तात् ॥ दीनार्त्तानाथबन्धुद्धृतसकलक
लस्सर्वजीवान्तरात्माश्रीनाथोऽव्यात्०॥
॥ २ ॥ यन्देवादेवतिर्य्यङ्मनुजपशुपत
न्मुख्यजन्मादिशक्तंस्वकर्म्भक्तार्त्तिनाशेस्व
भजनविमुखप्राणिवर्गेविरक्तम् ॥ भक्त्या
संसेव्यशक्रप्रमुखसुरगणो ऽप्येतिमुक्तिवि
पत्तेःश्रीनाथोऽव्या:त्० ॥ ३ ॥ येनश्रीस
ह्लिलासप्रचुररुचिरतापात्रनेत्रद्वयेनरथे
र्य्योद्रेकैकशालिस्फुरदमितलस द्दर्प्पकोद्द
र्प्पहर्त्रा ॥ शान्तेनात्यन्तभूम्नाजगदिदम
खिलम्पूरितंस्वेनधाम्नाश्रीनाथोऽव्यात्०
॥ ४ ॥ यस्मैकृत्वानमोसौसकृदपिवचसा
चेतसाभाक्तिभावात्सद्यः प्राप्नोत्ययत्न

त्पदमचलमहोदुर्लभंयोगिवर्य्यैः ॥ कोटि
ब्रह्माण्डभर्त्ताश्रुतिनिकरनुतस्स्वीयभक्तानु
सर्त्ताश्रीनाथोऽव्यात्० ॥ ५ ॥ यस्माद्देवा
दिवन्द्यात्परसुखकृदतिश्लाघ्यमानार्च्चना
द्ध्येः पूर्णासाधारणार्च्चात्स्थिरविभवभरा
द्वेदवेद्यैकतत्वात् ॥ भक्त्युद्रेकेणभक्तैश्चि
तसुकृतशतैःप्राप्यतेमोक्षलक्ष्मीःश्रीनाथो
ऽव्यात्स० ॥ ६ ॥ यस्यार्च्चासक्तचेतोज
नचरणसरोजन्मसेवैं करक्तास्सन्त्यक्ताघ
प्रसक्ताधृतसुगुणगणाभोगसम्प द्विरक्ताः
॥ मर्त्त्याअप्याश्वमर्त्त्याजगतिसमभवन्स
र्वलोकैकनाथःश्रीनाथोऽव्यात्० ॥ ७ ॥
स्मिन्नानावतारप्रगुणमणिखनौसर्वसम्पय
न्निवासेचिरसंविन्निष्प्रपञ्च प्रकृतिपरम

नोवागतोतस्वरूपे ॥ निश्शेषाबिश्वमेतद्वि
लयमतितरामञ्जसासम्प्रयातिश्रीनाथोऽ
व्यात्सदुः खाद्भवभयभरजात्स्वाङ्घ्रिपद्मा
श्रयंमाम् ॥ ८ ॥ श्रीनाथस्तवमेतम्पठ
तिचभक्त्याशृणोतियःप्रातः ॥ सश्रीनाथ
कृपातःश्रीनाथपदंव्रजत्येव ॥ ९ ॥ इति
श्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाह्व
यकविवरविरचितःश्रीनाथस्तवःसम्पूर्णः॥

# अथ मार्त्तण्डषट्पदीस्तोत्र प्रारम्भः ।

ॐ ॥ अपनयममनयनामयमविलम्वि
तमेवदेवदेवार्क ॥ नसभुवने स्तिमदवने

त्वदृतेयस्संविहितदृष्टिः ॥ १ ॥ तरणे
वितरकरुणयाममदृशिशिवमसियतो दृ
शस्स्वामी ॥ त्वामपहायसमुचिताविज्ञ
प्तिर्म्मेकिमितरस्मिन् ॥ २ ॥ दिनकरप
रिहरदुरितङ्कुरुनान्ममदृग्रुजांलय न्त्वरि
तम्॥शरणागतवतिरतिमतिवितरतिनोकः
प्रभुस्सुशर्म्मततिम् ॥ ३ ॥ उदयतिनि
जहृदियपाङ्क्षणमपितेदिनमणेदृढंरागः
॥ भाग्यन्दृग्रुग्वारकमुदायितुमुचितंनकि
न्तेषाम् ॥ ४ ॥ मिहिरमयूरमुखानांविहि
तंगुरुगदनिकृन्तनम्भवता॥ ममनयनरुग
पनयनेकिमुतसमुचितस्त्वयिविलम्बः ॥
॥ ५ ॥ कृतशरणगजनशर्म्मणिगददार
णकर्म्मणित्वयीहरवे ॥ किमुनभवेदून्मूल

नमाशुसमूलंमदक्षिरुजाम् ॥ ६ ॥ षट्प
दिकामितिसकृदपिमनुजो तिशुचिस्समु
त्समुच्चार्य्य ॥ नानुभवतिनयनरुजंस्वप्ने
ऽपिरवेरनुक्रोशात् ॥ ७ ॥ इतिश्रीमत्कौ
शल्यगोत्रोद्भव लक्ष्मीनारायणाह्वयकवि
वरविरचितं मार्त्तण्ड षट्पदी स्तोत्रं
सम्पूर्णम् ॥

## अथ मार्त्तण्डषट्पदीस्तोत्र प्रारम्भः ।

ॐ ॥ श्रीमार्त्तण्डमयामयमिममतिदु
स्सहमपानुदत्वारितम् ॥ नास्तिजगतिभ
वदितरः को पिहरेद्यो त्तिमेतांमे ॥ १ ॥

विश्वस्मिन्नखिले स्मिन्रोगनिवारणविधौ
समुत्साहात् ॥ वदहरिदश्वगृहीताकेनान्ये
नप्रभोदीक्षा ॥ २ ॥ आरोग्यम्भास्करतो
वाञ्छेदितियद्वचो स्तिपौराणम् ॥ तदस
त्यङ्कुरुतरणेदूरीकुरुगदमिमंवामे ॥ ३ ॥
यस्त्वांशरणमुपे तस्त्वगदस्यान्तम्प्रभोस
नाऽपश्यत् ॥ अद्यावधिनमयैदृतदृष्टंश्रुतम
पिचकस्माच्चित् ॥ ४ ॥ शरणागतवत्स
लतासर्वगुणेभ्यो धिकामताविदुषाम् ॥
किंत्विजहासिविभोतांशिवशिव शोभनमि
दन्त्वयिनो॥५॥दिनकरकुरुमयिकरुणान्दर्श
यसत्वरमथामयस्यान्तम् ॥ जगतिलभ
स्वसुकीर्त्तिङ्गौरवमथसर्वदेवेषु ॥ ६ ॥ दे
नकरीषट्पादिकामेताम्भक्त्या भणन्तियेम

नुजाः ॥ सकलामयनिर्म्मुक्तानिजजनयु
क्ताभवन्तिसुखिनस्ते ॥ ७ ॥ इतिश्रीम
त्कौशल्यगोत्रोद्भवलक्ष्मीनाराणाङ्कयकविव
रविरचिताश्रीमार्त्तण्डपट्पदीसम्पूर्णा ॥

# अथ देवीमहिम्नस्स्तोत्र प्रारम्भः ।

ॐ ॥ स्वस्तिश्रीगणेशाय नमः ॥ य
दीयमहिमायतिं श्रवणपालिशर्म्मायतिम
हा कलुपलाविनिर्म्भविकभूतिसम्भाविनी
म् ॥ विधिस्तुलयितुङ्क्षमोनभवतिस्तवा
म्यविके भवाम्यलमहङ्कथन्तवमवानि
मन्दोर्भकः ॥ १ ॥ हिमाद्रितनयासमोजग

तिनोवदान्योजनोनहित्रिभुवनान्तरेभव
तिमादृशोयाचकः ॥ विधायमतिनिश्चय
न्दृढमितिस्वभावोर्ज्जितेमृडानिसमुपाग
तश्शरणमुत्तमन्त्वामहम् ॥ २ ॥ समर्च्च
तिरमापतिम्पुनरुमापतिङ्कश्चन द्विपेन्द्र
रुचिराननम्पवनजंरविम्भैरवम् ॥ अहन्तु
निखिलादिमेहरिहरा दिभिर्वन्दितन्त्वदीय
पदपङ्कजंमन सिसर्वदासन्दधे ॥ ३ ॥
त्वमेवममदेवताभगवतित्वमेवप्रसूस्त्वमेव
जनकश्शिवेत्वमसिबन्धुरत्युत्तमः ॥ त्वमे
वगुरुरम्बिकेत्वमसिमेमतिस्त्वङ्गतिस्त्व
मेवचममाश्रयस्त्वमसिदेविसर्वंमम ॥ ४ ॥
त्वमेवहरिरीश्वरित्वमसि देविपद्मोद्भवस्त्व
मेवगिरिशाशिवेदिनमणिश्शशीतारकाः ॥

त्वमेवपृथिवीशुचिस्सलिलमम्बरंमारुतश्च
राचरमिदञ्जगत्त्वमसिसर्वरूपेऽम्बिके ॥
॥ ५ ॥ रमेशकमलासनप्रभृतिमौलिपात्र
स्थितैरशेषहरिदुज्ज्वलैर्म्मणिवरप्रदीपैर्म्मु
हुः ॥ उदारविशदस्मितेजननिदेविनीरा
जितन्त्वदीयचरणाम्बुजं हरतुमानसीमेव्य
थाम् ॥ ६ ॥ भवानिभवभाविनित्वमसिभ
क्तपक्षाविनीमहोद्धतसुरद्विषन्निवहदर्पसं
लाविनी ॥ अहोजननशूलिनस्त्वमसिशै
लजेभामिनीभवानिजगदम्बिके तवसमर्च्च
नासक्तधीः ॥ ७ ॥महोग्रदुरितौघहृत्त्रिवि
धतापभारापहत्परात्मपदबोधकृद्भवमय द्वि
षद्भेदकृत् ॥ विहायतवसेवनम्प्रकुरुतेनरो
ऽन्यस्ययोनिरस्यमणिमुत्तमंसभजते ॥

काचंमुदा ॥ ८ ॥ सनीरवरनीरदप्रवरका
न्तिदीक्षागुरुंविसारि त्रिमलप्रभान्धृतवती
श्चमुण्डस्त्रजम् ॥ वराभयकराम्पराम्भुजग
भूषणाम्भीषणान्तवाकृति मुमेनरस्स्मरति
यस्साकिन्नाप्नुयात् ॥ ९ ॥ त्वदीयममलं
यशोदशशताननोऽह्लीश्वरोगुहोऽ पिचषडा
ननःपशुपतिश्चपञ्चाननः॥विधिश्चचतुरा
ननोगिरिसुतेभृशङ्कीर्त्तयन्स्वकीयमुखधोर
णीसफलतांसमाशंसते ॥ १० ॥ तवार्च्चे
नपरायणोजननियोऽस्तिभूमण्डलेसएवभु
वनाधिपैर्भवतिवन्दनीयस्सदा ॥ तदीयप
दपङ्कजप्रणतिजातपुण्यव्रजाव्रजन्ति वि
बुधव्रजैरभिनुतन्त्वदीयम्पदम् ॥ ११ ॥
धराधरवरात्मजेत्रिभुवनाधिपैर्वाञ्छित न्त्व

दङ्घ्रिसरसीरुहप्रभवमासवन्दैवतः ॥ पि
बत्यतिमुदासकृज्जननियः कृतीमानबोभ
वामयविनाशिकेपिबातिकिंसमातुःपयः ॥
॥ १२ ॥ विशालकुलजन्मतानिगमवेदि
ताधर्म्मितामहाक्रतुसुकारितावहुविधव्रता
चारिता ॥ समेतिकिमुजन्मिनस्सफलतां
हितस्याम्बिके त्वदीयचरणाम्बुजेभवति
यस्यनोसम्मदः ॥ १३ ॥ जगज्जननपो
षणप्रलयकारिणः . कोटिकोविरिञ्चिमधु
विद्विषद्वृषभवानानित्यशः ॥ व्रजन्तिजन
नम्पुनर्ल्लयमहोयदीयेच्छयाभवानि भव
तीङ्कृतीजनिमतांवदत्येवकः ॥ १४ ॥
अदभ्रकलुषाश्रयाः कपटवृत्तिमतंसंश्रयान्नृ
शंसमनुजप्रियाः श्रुतिविरोधकारिक्रियाः॥

जनाअपिचयेशिवे तवकटाक्षपातङ्गताय
मस्यविकृताकृतेर्ज्जनानि दृकूपथंयान्तिकि
म् ॥ १५ ॥ त्वदीयनयनाञ्चलेननुसहस्र
शस्सस्तंतमनोभिलपितप्रदास्तवसमञ्च
केभ्यस्सदा ॥ वसन्तिविबुधद्रुमाः पतति
यत्रतद्भाग्यतस्तदीयगुणवर्णनेविधिरपि
क्षमःकिंशिवे ॥ १६ ॥ महामणिगणोल्ल
सत्कनकपीठकाध्यासिनीं वृहत्सदुपबर्हि
कांसुरनुतांसखीसंवृताम् ॥ किशोरशशि
शेखरांललितभूषणांत्वां स्वयो दधातिहृ
दयाम्बुजेनसकवीश्वरःकिम्भवेत् ॥ १७॥
तवादितिजसुन्दरीकबरवर्त्तिमाल्यस्फुराद्धि
रेफललनोल्लसन्निनदमञ्जुपादाम्बुज
म् ॥ मनो भिलपितप्रदंस्मरणतो पहा

थाम्बयस्सुरद्रुमगवेषकोनर पशुस्सएवोदि
तः ॥ १८ ॥ विलोक्यकतिचिज्जनान्पर
मदुःखितान्सन्ततंनिरीक्ष्यचसुखाम्बुधौक
तिचिदेवसम्मज्जतः ॥ त्वयीश्वरिकृपानि
धौकृतिफलप्रदायामहोनिरूपयति यो नरो
विषमतांसकिङ्कोविदः ॥ १९ ॥ शशाङ्
करुचिरालिकेनरशिरोलसन्मालिकेद्विपज्ज
नकरालिकेदुरितवृन्दसञ्चालिके ॥ जगत्क
मलनालिकेतुहिनभूभृतोबालिके निधेहिम
यिबालकेभविकमुत्तमङ्कालिके ॥२०॥ प्र
णामनिरतामरव्यसनवर्ग्ग निर्मूलकंमहो
ल्लसदनुत्तमत्रिदशसम्पदोघप्रदम् ॥ अन
न्तजननार्ज्जितप्रबलकल्मषध्वंसकङ्कृपा
मसृणमम्बिकेमयिदृगञ्चलम्प्रेरय ॥२१॥

अनन्यगतिकंशिशुङ्कुमतिविभ्रमैकस्थलं
खलप्रकृतिमुल्वणव्यवहृतिङ्खलाधीश्वरम्
। महाविषयभोगिभिर्गिलितमुत्पथासक्ति
कंसमुद्धरभवाम्बुधेः करुणयाद्यमामम्बिके
॥ २२ ॥ विरिञ्चिरखिलञ्जगत्सृजतिपा
तिपद्मापतिर्म्महोग्रवपुरीश्वरोहरतियद्दृग
न्तेरितः ॥ कृपारसपयोनिधीन्निखिलताप
हृत्सन्निधिंविहायभवती महज्जननियानि
कानीश्वरि ॥ २३ ॥ नकिन्त्वमसिशैलजे
त्रिभुवनेश्वरीचण्डिके नकिन्त्रिभुवनेऽथवा
ममसमुद्भवोविद्यते ॥ यतस्त्वमधुनाऽपि
मांव्यथितमानसङ्घातुकं भ्रंपध्वजपुरस्स
रैरवासिनाम्बकारुण्यतः ॥ २४ ॥ भृशाङ्क
कलुषिताशिवे तवकृपादृशावीक्षितास्सु

सिद्धिममरेश्वरप्रभृतिवाञ्छितामागमन् ॥
अहंनकथमम्बिकेऽव्यसनतो यमोच्येत्वया
महेश्वरिमहीभृताकिमहिनाकणोदुर्द्धरः ॥
॥ २५ ॥ अहम्पतितपावनीपतितराजरा
जोऽस्म्ययंविशालमतिदास्म्यहं मतिविव
र्ज्जितोऽयञ्जनः ॥ अहंशरणगाविनीशर
णगोत्तमो यम्पुमानितीश्वरिविचिन्त्यमाम
वितुमर्हसित्वम्भवात् ॥ २६ ॥ महाद्युजि
नभृज्जनप्रकरचारुचूडामणिं वरिष्ठजन
मानसप्रियतयोज्झितन्दुर्म्मतिम् ॥ महे
श्वरिजहासिमान्त्वमपिचेत्पदाब्जाश्रयङ्कि
मेण्यसिशरण्यताजनितमुज्ज्वलंसद्यशः ॥
॥ २७ ॥ अखर्वतमगर्वभृन्महिषमुख्यदेव
द्विषद्विशालकुलभुरुहप्रलयएव किंसंलयः

॥ बलस्यनिखिलस्यतेऽभवदहोमदीयम्म
हृत्सुदुःखमनुभूयपत्त्वमिहनिद्रितासीश्वरि
॥ २८ ॥ रटामिकिमुरोदिमिप्रपतनङ्करो
मिग्रहोपतामिगिरिश्शृङ्गतो विजनकाननं
यामिकिम ॥ महोग्रविषमश्निकिञ्छुरिकया
तनुंहन्म्यिकिनमामवासि कृच्छ्रतस्स्वजनम
म्वसद्योयतः ॥ २९ ॥ मदीयहृदयोल्लस
द्व्यसनवर्गसंमर्दने विलम्बमधुना त्यजत्य
जमदागसाञ्चितनम् ॥ गृहाणकरयुग्म
कङ्करयुगेनदीनस्यमे महाव्यसनसागरा
च्चपलमुद्धरेशानिमाम् ॥ ३० ॥ पिताऽयं
मातम्मांयुवतिदहनेऽ पातयदहोइमेमित्र
व्याजात्परमरिपवोदुष्टमतिदाः ॥ नन्वो
कःकोऽप्येवंवितरतिमयीशानिसुमतिन्त्वद

न्यःकोमेऽस्तित्रिजगतिकृपालुर्हितकरः ॥
॥ ३१ ॥ चिदानन्दाकारेऽखिलजगदुदारे
भवहरेहरप्रेमाधारे त्रिभुवनविहारेसुखकरे
॥ महाऽकूपारेऽस्मिन्निपतितसमुद्धारणपरे
कुरुत्वंसंसारेमयिनिपतितेदेविकरुणाम् ॥
॥ ३२ ॥ नजानेऽहंमातस्सुरनरमनोरञ्ज
नविधिंविधानंमन्त्राणामपि गिरिसुतेतन्त्र
विचितिम् ॥ परीक्षांरोगाणामपिमिहिरमु
ख्यग्रहदशांशरण्येजानेऽहन्तवचरणपङ्क
रुहनतिम्॥३३॥ अयेयावन्मातर्हृदयदृढस
न्तापजनका महोग्रासिप्रासप्रमुखविकरा
लायुधधराः ॥ भटाभानोस्सूनोर्न्नयनवि
षयास्सन्तिनहिमे मदुद्धारन्तावत्कुरुकिम
नसोरौषधवरैः ॥ ३४ ॥ यस्याःपादसरो

रुहस्यरजसोलब्ध्वाकणन्दुर्लभ म्ब्रह्मा
ण्डरूपमहत्तररूपसुतराङ्कर्त्ताऽभवत्पद्मजः
॥ क्षीराम्भोधिसुतापतिस्समभवत्संरक्षणे
शक्तिमान् रुन्द्रोन्तेकुशलोहारिस्सुरपति
स्सेवेऽम्बिकेत्वामहम् ॥ ३५ ॥ ब्रह्माण्डा
निसहस्रशो तिविरलंयस्यांलुठन्त्यञ्जसा
चैतन्यामृतमद्वयंसुखमयं यस्यास्स्वरूपं
विदुः ॥ याजातागिरिवेश्मनित्रिगुणिकां
स्वीकृत्यशक्तिम्परा म्भूभोदण्डइवानिपत्य
भवतीं वन्देम्बिके हंमुदा ॥ ३६ ॥ ता
वत्तीर्थकदम्बकान्त्रिभुवने यातिप्रतिष्ठाम्प
राङ् कृच्छ्रादिव्रतकोटयस्स्तुतिपदन्तावद्व
वन्तीऽवरि ॥ तावच्चक्रतवोऽश्वमेधकमुखा
गर्ज्जन्तिसन्दर्प्पिता यावत्सर्वसुगर्वभङ्ग

निपुणा नोदेतिभक्तिस्तव ॥ ३७ ॥ यस्मै
कोटियुगान्तरैरविरतङ्कुर्वन्तिगाढन्तपःप
र्णाम्भःपवनाशिनश्चमुनयो देवेशमुख्या
स्सुराः ॥ ब्रह्माण्डाधिपतित्वमाशुददितु
न्तेभ्योयदेकङ्क्षमं मातस्त्वंममस्तकेक
रुणयाहस्तारविन्दङ्कुरु ॥ ३८ ॥ प्रत्य
ग्देशेप्रसिद्धोदुरितभरहर स्सैन्धवारण्यभू
षा तीर्थाध्यक्षःकटाक्षोजयतिचंरुचिरा स
न्नदीश्रीवितस्ता ॥ तन्नीरस्नानपानप्रति
हतकलुषैरीशभक्तैर्म्महद्भि र्विद्वाद्भिश्शोभ
मानेमहतिभयहरे पत्तनेपुण्ययोगात् ३९॥
श्रीमत्कौशल्यगोत्रेभवदतिविमले श्रीह
जूरिः कुलेन्दुर्लक्ष्मीनारायणेनस्फुरितम
तिमयातस्यपुत्रेणकाश्याम् ॥ द्वीपेन्द्वङ्के

न्दुवर्षेमधुमदनातिथाविन्दुजेशुक्लपक्षे दे
विस्तोत्रंमाहिम्नस्तवकृत मितियत्पादपु
ष्याञ्जलिस्ते ॥ ४० ॥ इतिश्रीमत्कौश
ल्यगोत्रोद्भव लक्ष्मीनारायणाह्वयकविवर
विरचितं श्रीदेवीमहिम्नस्तोत्रं सम्पू
र्णम् ॥ ॥ ॥ ॥ ॥

## ॥ अथ विधिदशकप्रारम्भः ॥

ॐ ॥ ह निर्ल्लोभोजीवनंवामृतिर्वाऽकी
र्त्तिःकीर्तिर्य्यंद्भवेसर्वमेतत् ॥ उज्झित्वाऽऽ
शाहीनताञ्चापिचिन्तां संसेवेऽहन्तांविधिं
सर्वदैव ॥ १ ॥ दीनानांयोदीनतामाशुह
त्वा प्रौढांशक्तिंसंविधत्तेऽत्ययत्नात् ॥ नि

स्स्वान्सद्योयो महाढ्यान्विधत्तेसंसेवे० ॥
॥ २ ॥ सम्पद्यन्तेयत्प्रभावात्सखायस्त्य
क्त्वावैरंवैरिणोऽपीहसद्यः ॥ स्नेहंहित्वास्ने
हवन्तस्सपत्नास्संसेवे० ॥ ३ ॥ ध्यानंसे
वांवीर्य्यवत्ताञ्चवित्तं साहाय्यंवासाक्षरत्वं
सुधीत्वम् ॥ सद्दंशत्वंवाऽपिनापेक्षतेयस्संसे
वे० ॥ ४ ॥ उद्योगान्यःसन्तनोत्युज्झिता
र्थान्निर्य्यत्नंयस्साधयत्याशुकार्य्यम् ॥ स
र्वस्मिन्वाकर्म्मणीहक्षमोयस्संसेवे० ॥ ५ ॥
अम्भोधीनांमध्यनःपारतोवा काष्ठान्ता
द्वाविघ्नवारान्विदार्य्य ॥ आकृष्येष्टंराति
योवस्तुपुम्भ्यस्संसेवे० ॥ ६ ॥ स्वान्नाती
तंसन्निधत्तेपदार्थम्प्राणिस्थंवा योविधत्ते
ऽत्यदृश्यम् ॥ कर्त्तुंसम्यग्यो प्यकर्त्तुंसम

र्थस्संसेवे० ॥ ७ ॥ भाविन्यर्थेकारयस्याग्र
हंयोऽभाविन्यर्थेत्याजयस्याग्रहंयः ॥ ईशे
च्छायास्सोदरंसानुरागं संसेवे० ॥ ८ ॥
सम्प्राप्यासौयंसहायम्प्रमादः प्रौढोद्योग
प्रोज्जयीजायते त्र ॥ सर्वावस्था ऽचिन्त
नीयप्रभावंसंसेवे० ॥ ९ ॥ धर्म्माधर्म्मौयं
नसम्प्रेरितो यंनाप्याकाङ्क्षन्प्रीतिमान्सं
विधन्ते ॥ सर्वंसम्यग्दर्शयित्वाऽयतेयस्सं
सेवे० ॥ १० ॥ विधिदशकमिदन्धियाकृ
तीयःपुरुपरि शीलयभवत्युदारशीलः ॥
कथमपिचकदाचनापिनासौ समनुभवत्य
विवेकहेतुमाधिम् ॥ ११ ॥ नन्दाब्ध्यङ्के
न्दुमानेब्दशुक्लेपक्षेथफाल्गुने ॥ एकादश्यां
रत्नाकाश्याम्प्रकाशंसमगादिदम् ॥ १२ ॥

इतिश्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाङ्कयकविबराविरचितंविधिदशकम् ॥

## ॥ अथपौरुषंदशकमारम्भः ॥

ॐ ॥ येनदाशरथिरञ्जसाम्बुधौकेवलम्पशुसहायताश्रितः ॥ सेतुमाशुविततंविनिर्म्ममेपौरुषङ्कृतमतिस्तदाश्रयेत् ॥ १ ॥ इक्षुरेषकिलयत्प्रभावतः काश्यपीपतिकिरीटभूषणम् ॥ हरिकोमणिरनुत्तमोभवत्पौरुषं० ॥ २ ॥ संविधाययदिहाप्यनेकशःप्राणिनःसुरवरादितांय्युः॥सर्वथाऽतिभजनीयतास्पदम्पौरुषं० ॥३॥ मानवोऽतिलघुरप्यहोभृशंयत्समाश्रयणमात्रतः किल

॥ कर्मसाधयतिदुष्करम्परम्पौरुषं० ॥ ४ ॥
मत्पराअपिचयत्पराङ्मुखामानवाअपिकथं
मनोरथम् ॥ यान्तिनापिखलुयान्तिजातु
चित्पौरुषं० ॥ ५ ॥ सर्वथैवविधुरामहाधि
नामानवायदनुसृत्यकेवलम् ॥ वाञ्छिता
र्थमगमन्सहस्रशःपौरुषं० ॥ ६ ॥ यद्विना
सदपिसत्तिलोध तोनैवनिस्सरतितैलमण्व
पि ॥ मारुतस्स्पृशतिनापिसन्पुनःपौरुषं०
॥ ७ ॥ दुर्बलोऽपिबलवन्तमञ्जसायतस्
खःखलुतदाश्रिनेतरम् ॥ सत्वरंविजयते
तराम्भृशम्पौरुषं० ॥ ८ ॥ मन्दधीरपिच
जायतेसुधीस्सामयोऽपिविगतामयोभृशम्
॥ निर्द्धनोऽपिधनवान्यदर्चनात्पौरुषं ॥ ९ ॥
किम्फलंनुबहुभाषणेनमेसत्यमेव निगदा

म्यहम्बुधाः ॥ यद्विवानघटतेऽपिजीवनम्पौ
रुषं० ॥ १० ॥ पौरुषदशकमिदंयस्सुतरा
म्परिशील्यपौरुषङ्कुरुते ॥ कथमपिजातु
सविपदांनविधेयोजायतेमनुजः ॥ ११ ॥
खवाणाङ्कमहीमानेवत्सरेऽथमधौसिते ॥
पञ्चम्यामधिकाशी दम्पूर्णतामगमत्तराम्
॥ १२ ॥ इतिश्रीमत्कौशल्यगोत्रोद्भवल
क्ष्मीनारायणाक्ष्य कविवरविरचितम्पौरुष
दशकंसम्पूर्णम् ॥ ॥ ॥ ॥

# अथउपदेशपञ्चकप्रारम्भः ।

ॐ ॥ शुभमशुभंयद्विधिविहितन्तत् ॥
कृतममुनेतन्मतिरसतीयम् ॥ १ ॥ बुधव

रदैन्यङ्कुरुनकदाचित् ॥ रुचिरिहचेत्तेकु रुगिरिशेतत् ॥ २ ॥ विलसतियस्मिन्नरि ननुदैन्यम् ॥ वसतिनतास्मिन्किमपिगुरु त्वम् ॥ ३ ॥ धनमदिगेहेस्वयमयसेचेत्॥ त्वयिशुनिचस्यात्सुबुधभिदाका ॥ ४ ॥ तवकुरुतेयःकृतिवरानिन्दाम् ॥ त्वदघहर न्तम्प्रणिपतभक्त्या ॥ ५ ॥ इतिश्रीमत्कौ शल्यगोत्रोद्भवलक्ष्मी नारायणाख्यकविवर विरचितमुपदेशपञ्चकंसम्पूर्णम् ॥

## अथ गुदवदनपरीक्षापञ्चक प्रारम्भः ।

ॐ ॥ फललवहीनात्राणीयेपामास्याद्ध

ह्रिस्समुल्लसति ॥ गुदवदनाविवरभेदोदन्तै
रनुमीयतेतेषाम् ॥ १ ॥ सदसिसतामपि
किमपिप्रोच्यपुनस्तन्नचिन्तयन्त्यायिये ॥
गु० ॥ २ ॥ अविमृश्यकिमपिसततंयेषां
वदनाद्वचांसिनिर्य्यान्ति ॥ गुद० ॥ ३ ॥
येषांवचसिनभेदोभा तिकथञ्चित्कदापिश
पसानाम् ॥ गु० ॥ ४ ॥ शिवइतिवर्णेह्रि
तयंयेषांवदनंनजात्वलङ्कुरुते ॥ गुद० ॥
॥ ५ ॥ इतिश्रीमत्कौशल्यगोत्रोद्भवलक्ष्मी
नारायणाह्वयकविवर विरचितङ्गुदवदन
परीक्षापञ्चकंसम्पूर्णम् ॥ ॥ * ॥ ॥

॥ इति श्री स्तोत्र कल्पतरुः समाप्तः ॥

# स्तोत्र कल्पतरु सूची

स्तोत्र कल्पतरु सूची पृ०